श्रीः

# योगि श्री नागलिङ्ग शिवाराध्य कृतौ

## ब्रह्मपथे

*

शिवाद्वैतपर्यङ्किकाख्यव्याख्यासनाथे

सव्यभागे वेदपथे

## वैष्णवपथ प्रतिषेधः । २ ।

---

एल्कुर्त्यग्रहारिकेण

काशीनाधुनि अक्कमाराध्यसूनुना

ब्र। श्री। पूर्णमल्लिकार्जुनरायेण यम्. ए., बि. यल्.,.

धनप्रदानेन

मुद्रापितः

१९३६

Registered ] [ मूल्यम् रु ०-१२-०

तेनालि भारती मुद्राक्षरशालायां मुद्रितः ।

## वंशवृक्षः




श्री॥ श्री॥ काशीनाधुनि वीरभद्राराध्यः पेद्दवीरनाराध्यापराह्वयः } एल्कुर्त्यग्रहारिककूटस्थः

- चिनवीरनाराध्यः
  एल्कुर्रुदानशासनप्रतिग्रहीता
  सप्तसंतानरचयिताच
  सनद् ११७० फसली
  दाता वेंकटाद्यप्पारायः
- गौतमाराध्यः
- चंद्रशेखराराध्यः
- काळहस्तिलिंगाराध्यः

२


काळहस्तिलिंगाराध्यः
भैरवमूर्तिः
मल्लनाराध्यः
चंद्रशेखरः
पेद्दवीरेशलिंगाराध्यः
विय्यन्नाराध्यः
दत्तः
कुमारमल्लनाराध्यः
अल्लमार्याराध्यः


अल्लमार्याराध्यः
पूर्णमल्लिकार्जुनरायः, यम्. ए., बि. यल्.
वैष्णवपथप्रतिपेध
मुद्रणार्थधनप्रदाता
सुब्रह्मण्यम्
वीरेश्वरः
सावित्रीप्रसाद नागमल्लिकार्जुनः
सुब्रह्मण्यम्
सांबार्यः

श्री शिवाय गुरवेनमः

# वेदपथे

## वैष्णवपथ प्रतिषेधः



श्लो ॥ ब्रह्मेश मुग्र मथ भूतपतिञ्च भर्गम्
रुद्रं शिवं पशुपतिं निगमान्तवेद्यम् ।
देवं महान्तमपि विद्विषता जनानाम्
पन्थाः कथम् महितवेदपथानुगः स्यात् ॥ १ ॥

व्या ॥ ब्रह्मेति, वेदेषु परमेश्वरो ब्रह्मपदेन निर्दिश्यते, यथा ॥ श्रु ॥ सत्यं ज्ञान मनन्त म्ब्रह्मेति ॥ ब्रह्मपदंहि निरुपपद म्भवति शिवस्यैवाऽभिधानम् । तत्वं व्यासपथे भविष्यति ॥ अ शेशपद मीशान महेश्वर सर्वेश्वरादिपदाना मुपलक्षकम् । एतैरपि पदैः परंब्रह्म निर्दिश्यते ॥ यथा ॥श्रु॥ ईश स्सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक् । ईशानो भूतभव्यस्य । मायान्तु प्रकृतिं विद्या न्मायिनन्तु महेश्वरम् । सर्वैश्वर्यसम्पन्न स्सर्वेश्वर श्शम्भु राकाशमध्ये, इतिच । एतानिच पदानि परमेश्वरे योगरूढानीति लोकवेदाभ्या मवगम्यते । तथाहि ॥ श्रु॥ ईशान स्सर्वविद्याना मीश्वर स्सर्वभूतानाम्, त मीश्वराणाम् परम म्महेश्वर मित्यादिभि रीश्वरविषयमन्त्रैः यत ईश्वरइत्यादिभि रीश्वरविषयार्थवादैः । श्रु ॥ कारणन्तु ध्येय स्सर्वैश्वर्य सम्पन्न स्सर्वेश्वर श्शम्भु राकाशमध्ये, शिव एको ध्येय श्शिवङ्कर इत्यादिभि र्विधिभिः । स्तुत्यर्थत्वगन्धरहित लोकवेदसाधारण नामपरिगण नैदम्पर्य प्रवृत्त नैघण्टुकवचनैः । यस्मि न्नीश्वर इत्यनन्यविषय श्शब्दो यथार्थाक्षर

इत्याद्यभियुक्तोक्तिभिश्च । ईश्वरपदं परमशिवएव रूढ मित्यवगम्यते । तथाच, जगत् सेश्वर मङ्गीकार्य मन्यथा, नास्तिक्यापत्तेः । एवञ्च, नारायणेन सब्रह्मकमिव, ब्रह्मणा सनारायणकमिवच, कारणत्वेनानभ्युपगतै रनीश्वरशब्दवाच्यदेवतान्तरै र्जग त्सेश्वरं नभवति । अतएव श्रीसुदर्शनाचार्यचरणै श्श्रुतिसूक्तिमालायाम्—

श्लो ॥ विश्वं निरीश्वर मिदं जग दाह सांख्यो<br>
योगश्च सेश्वर मुभा वनुवादिनोऽन्ये ।<br>
तल्लोकवेदविदितेश्वरवर्जनेन<br>
कोयंश्रमःकतिचिदीश्वर मन्य माहु रित्युक्तम् ॥

अस्माभिश्च सिद्धान्तसंग्रहे ॥ येषां स्या दीश्वरो देव स्सेश्वरा स्ते प्रकीर्तिताः । येषान्तुनेश्वरो देवः कथिता स्ते निरीश्वरा इति ॥

एव मुग्रपदं भीमपदस्या प्युपलक्षकम् । उग्रभीमपदेहि परमेश्वरासाधारणाभिधानतया निघंटुकारै र्निर्धारिते ॥

ननु, उग्रपदस्य क्रौर्यवाचितया, भीमपदस्य भयङ्करत्वबोधकतयाच तामसत्व मावेदयत इतिचे न्न ।श्रु ॥ उग्रो स्युग्रोहं सजातीयेषु भूयास मित्युग्रत्वस्याशास्यत्वेन उत्पूर्वादिमं रुदञ्च त्युत्तरो भवतीत्यर्थे । सू ॥ ऋज्रेंद्राग्रौणादिकसूत्रेण रप्रत्यया न्निपातितोऽय मुग्रशब्द श्शिवस्य सर्वोत्तरत्ववाचित्वावगमेनाऽस्य क्रौर्यवाचित्वाभावात् । एवं भीमपदं भयंकरत्ववाच्यपि तस्य निरतिशय मुत्कर्ष मावाहयत्येव ।

श्रु ॥ यदिदं किञ्च जगत्सर्वं प्राण एजति निस्सृतम् । य एत द्विदु रमृतास्ते भवन्ति, भया दिन्द्र श्चाग्नि श्चेत्यादिश्रुतिवचनै र्भयहेतु त्वस्य सर्वनियन्तृपरब्रह्मत्वबोधकत्वात् । एवं भूतपत्यभिधानमपि जगत्कार णासाधारणम् । तथाहि । श्रु ॥ एष भूतपति रेषभूतपालइत्यादि, भूतपति पदंहि परमेश्वरासाधारणमिति । नि ॥ भूतेशः खण्डपरशु रित्यादिनैघण्टु कवचनै रवगम्यते, तथा भर्गपदंच सावित्रीघटितं शिवमेवाऽभिदधाति । हर स्स्मरहरो भर्ग इत्यादिनैघण्टुकोक्तिभिः नच —सावित्रीगतं सान्तं भर्गःपदमेव । तस्मा न्नेदं शिवाभिधानमिति वाच्यम्, तस्याऽदन्ततया शिवा भिधानमेवेति निरूपयिष्यमाणत्वात्, एवं रुद्रपदम पीश्वरासाधारणं जगत्का रणत्वाधिकरणाभिधान मेवेति निगमेषु प्रयुक्तम् । तथाहि, एकएव रुद्रो नद्वितीयाय तस्थइत्यादिना, एक मेवाऽद्वितीयं ब्रह्मे त्यादिवाक्यसमाना र्थकवाक्यघटिततया भवति ब्रह्मण एवाऽसाधारणमिति विज्ञायते, तथा शिवपदमपि । श्रु । शिवएव केवलः, शिवएको ध्येयः, शिव मद्वैत ञ्चतुर्थं म्मन्यन्तइत्यादिना निगमान्तेषु जगत्कारणासाधारणाभिधानत याम्नातम्, तथा महादेवपदमपि, शिवासाधारणम्, सकलदेवताश्रेष्ठत्वबोधकम् सर्ववेद प्रतिपाद्यत्वप्रतिनियतम् ॥

एवं सकलनिगमप्रतिपाद्यतया विदितं महेश्वरमपि विद्विषतां मार्गः कथमपि नंवेदपथ मनुसरतीति नवक्तव्यम् बहु----

## गायत्रीमन्त्रार्थ निर्णयः

अत्र ॥ परकीयस्य मार्गस्य वेदपरिपन्थित्व मितोपि प्रतिपिपादयिषु राह

मू ॥ गायत्रीमनुशाब्दबोधवशतो यज्ञेश्वरत्वा त्तथा
शेषित्वा त्क्रमसामपि प्रणवमुख्याख्यात्तविख्यातितः ।
पुंसूक्तस्वरसार्थभाजनतया वेदैकवेद्यं शिवम्
विद्विष्याऽन्यसुरा न्समाश्रितवतां पन्थाः कथं वैदिकः ॥

व्या ॥ गायत्रीति ॥ द्वे जन्मनी द्विजातीनाम् मातु स्स्या त्प्रथमं तयोः द्वितीयम् छन्दसां मातु र्विधिव द्ब्रह्मणा द्गुरोरिति वचनेन, सावित्र्या द्विजसमुपास्यतया नियमितत्वेन, अस्या स्सर्ववेदमातृरूपत्वेनच सावित्री प्रतिपाद्यस्यैव तत्वस्य सर्ववेदवेद्यत्वेन वैदिकद्विजसमाश्रयणीयतया तदन्य देवताश्रयस्य पथो वेदपथपरिपन्थित्वम् पर्वतव दविकम्प्यम्. सावित्रीप्रति पाद्यं तत्वम् शिवएव ॥ तथाहि । श्रु ॥ त त्सवितु र्वरेण्यम् । भर्गो देवस्य धीमहि, धियो यो नः प्रचोदया दिति गायत्री ऋक्, सर्वेष्वपि वेदेषु पञ्चमा नोपलभ्यते, अस्या श्शिवाभिधानभूतभर्गपदभूषिततया शिवोपासना मियं द्विजकुलनियतां विशदयती त्यवगम्यते ।

ननु, गायत्रीछन्दस्कतयाऽस्या गायत्रीशब्दितत्वेपि सावित्रीसंज्ञ याएव व्यवहारसिद्धत्वेन, सवितु र्देवस्य भर्गो धीमहीति धीमहीतिक्रिया कांक्षित कर्मसमर्पक तेजोवाचितयाऽस्य सान्तत्वद्योतनेन शिववाचकत्व सम्प्रतिपत्तौ नैशिवोपासनाप्रतिपादकत्व मितिचे न्न ।

भर्ग इत्यस्य तेजोवाचकत्वे क्लीवतया धियो यो नः प्रचोदया दित्यनुवादे यइति पुंलिंगतया ग्रहणेन पुंस्त्वद्योतनेन तस्य शिवैकान्ति कत्वख्यापनात् ।

नच, तत्सवितु र्वरेण्य मित्युपक्रमे तदिति क्लीवतयैव निर्दिष्ट त्वेन, अनुपसञ्जातविरोधितया उपक्रमस्य प्राबल्येन नानुवादगतपुंस्त्वानुरो धेन पुंल्लिङ्गत्वं तदनुरोधेन शिवपरत्वप्रत्याशाचेति वाच्यम्, धियो योन इत्यस्यैव पुरोवादतया तदनुरोधेन पुंस्त्वसिद्ध्या शिवपरत्वाक्षतेः ।

ननु, प्रारम्भगतस्य तदित्यादे रौपसंहारिकत्व मवसानगतस्य धियोयोन इत्यस्य पुरोवादत्वंच पाठक्रमविरुद्ध मितिचेन्न- यो भर्गः नः धियः प्रचोदयात्, तत् धीमही त्यत्र- अर्थक्रमस्यैव प्रबलतया तदनुरोधेन धियो योन इत्यस्यै वोपक्रमत्वसिद्धे र्निष्प्रत्यूहत्वात् । विश्वजिदधिकरणे- दूरस्थेनापि तेनसः । अर्थतो ह्यसमर्थाना मानन्तर्यं मकारण मित्यर्थक्रम प्रबलतमत्वस्य राद्धान्तितत्वात्—

नच, अर्थतो ह्यसमर्थानां तथात्वेपि प्रकृते तादृशासामर्थ्यविर हेण न विश्वजिदधिकरणोक्तन्यायप्रसक्तिरितिवाच्यम्, तदित्यादिर्धीमही त्यन्तवचनस्य यत्तदो र्नित्यसम्बन्धितया साकांक्षत्वेन धियो योन इति यच्छब्दघटितवचनसाकांक्षत्वेन असामर्थ्यस्य स्फुटत्वेन विश्वजिदधिकर णोक्तन्यायप्रवृत्ते र्दुर्निवारत्वात् ।

नच, अर्थक्रमानुरोधेन धियो योन इत्यस्य पुरोवादत्वाभ्युपगम पक्षे तथात्वेपि पाठक्रमानुरोधेन तत्सवितु रित्यादे रेव पुरोवादत्वाभ्युपगम

पक्षे पुरोवादगतवक्ष्यैव्यानुरोधेन भर्गइत्यस्य सान्ततया शिववाचकत्व मसि
द्धमिति वाच्यम्, न्याय्यम प्यर्थक्रम मनभ्युपेत्य पाठक्रमानुरोधेन तदित्या
देरेव पुरोवादत्वाभ्युपगमेपि तत्सवितुरिति पुरोवादगत सवितृमण्डलस्वा
म्यलिङ्गस्य शिवैकान्तिकत्वेन तदनुरोधेन भर्गइत्यस्य शिवपरतया सावित्र्या
श्शिवोपासनाप्रतिपादकत्वावसायात्, सवितृमण्डलस्वाम्यलिङ्गं शिवैकान्ति
कमि त्यग्रे निरूपयिष्यमाणत्वात् ।

ननु, व्याख्यातृभि र्बहुभि र्भर्गइत्यस्य सान्ततयैव विवृतत्वेन
तस्याऽदन्तत्वाभावात् शिववाचकत्वंनसिध्यतीतिचे न्न- श्रीनीलकण्ठराघव
सुदर्शनाचार्य श्रीमदप्पयदीक्षितादिभि रसंख्यै स्संख्यावद्भि स्तस्याऽ
दन्तत्वेनैव व्याख्यातत्वेन सान्तत्वस्य श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्या
रूपषड्विधतात्पर्यलिङ्गबाधिततया चानुपादेयत्वेन अदन्तपक्षस्य निरवग्र
तया शिवपरत्वाक्षतेः ।

तथाहि, सर्वत्रहि प्रमाणेषु भर्गइति पद मकारान्ततयै वोपल
भ्यते । नकुत्रापि सान्ततया ।

तथाच, तलवकारिणाम् ब्राह्मणे द्वितीयो भर्गमयः पादइति
सामसु सावित्र्युपनिषदिच- द्वितीयो भर्गमयः पादइति- मैत्रायणीयेच
बुद्धयो वै धिय स्ता योऽस्माकम् प्रचोदया दित्याहु र्ब्रह्मवादिनोऽ
भर्गइति- योहवा अस्मि न्नादित्ये निहित स्तारकोऽक्षिणि चैष भर्गाख्य
भाभि र्गति रस्यहीति भर्गः भर्जयतीति वैष भर्गइति, रुद्रो ब्रह्मवादिनोऽ

भर्गइति भासयतीमा न्लोकानिति रञ्जय तीमानि भूतानि गच्छतइति गच्छत्यस्मि न्नागच्छ त्यस्मा इमाः प्रजा स्तस्मा द्भारका द्भर्गइति, अमृतत्वाख्य श्चेता मन्ता गन्ताइति, एषहि स्व ल्वात्मेशानइति, य एष तपती त्यतिच- तथा त्रिपुरातपने; भर्गो देवस्य धीमही त्याधारशिवाक्ष रं गम्यते, न्तिभर्गो देवस्य धीमहीत्येवं व्याख्यास्याम इत्यारभ्य- भगवा न्परमेश्वरो भर्गो देवइतिच, एवं सर्वेष्वपि प्रमाणेषु भर्गः पुमानेवाऽनूद्यते- परामृश्यते, विशे ष्यतेच, तस्मा द्भर्गइति भवति पुमानेव नापुमानिति पुंस्त्वश्रुति निष्प्र त्यूहा ॥

किञ्च, अनुवादेपि यत्र भर्गपदस्य गायत्रीघटितस्य ग्रहणम्- तत्र सर्वत्रापि भर्गाख्यं विष्णुसम्ज्ञम् भर्गाख्यं विष्णुसज्ञमतु इत्यादिषु चाका रान्ततयैव ग्रहणेन तस्य सान्तत्व मप्रमितमिति व्यक्तम् ॥

नच, अङ्गगुणविरोधेच तादर्थ्यादिति न्यायेन छान्दस स्सन्धिः कल्प्यतामिति वाच्यम्, विरोधस्य दुर्वचत्वेन लोकसिद्धभर्गशब्दसत्ता मात्र मवलम्ब्य गायत्रीगतस्य तत्वनिर्णयस्य पुंस्त्वाकारान्तत्वावरुद्धतदनु वादकवेदविरोधदूषितत्वेन तस्य विद्वज्जनानादरणीयत्वात् ॥

अथ सवितृमण्डलस्वाम्यलिङ्गम प्यदन्तत्वस्यैवाऽनुकूलम्, अका रान्तभर्गपदस्वरसाभिधेयश्रीकण्ठमात्रसाधारणत्वात् । आदित्यमण्डलस्वा म्यंहि पारमेश्वरम् प्रसिद्धम्- यथाग्रहयज्ञे- आदित्यमण्डल स्यादित्यस्यच मण्डलाधिष्ठातुः परमेश्वरएव स्वामी निर्दिष्टः । नैवं देवतान्तरम् । तत्रहि विनियुक्ता मन्त्रा स्सूर्याचन्द्रमसो श्शिवगौरीस्वत्वा तादात्म्यं तयो

बोंधयन्ति, यथा, एषा मीशे पशुपतिः पशूनां चतुष्पदा मुतच द्विपद मिति, गौरी मिमाय सलिलानि तक्षतीति, तथा, ज्यौतिषेऽपि अर्क श्शम्भु रुदाहृत इति स्पष्ट मादित्यस्य शैवत्वम्, तथा, यजुषि खिल काण्डे नारायणोपनिषदि सूर्यमण्डलान्तर्वर्तिपुरुषम् हिरण्मयं निरूप्य तस्य नमश्शेषित्वप्रत्यभिज्ञापकम्, नमोहिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेंऽबिकापतय उमापतये पशुपतये नमोनम इति श्रूयते, तथा, आरुणकेतुके, सूर्यमण्डल प्रस्तावे, यएको रुद्र उच्यते- रुद्राणाम् स्थाने स्वतेजसा भाति- एत्यादिना रुद्रस्वाम्यं मण्डले स्पष्ट मुक्तम्, आयुष्यसू क्तेच, सकुटुम्बे चन्द्रचूडे हूयमाने विभ्राजमान स्सरिरस्य मध्या द्रोच मानो घर्मरुचि र्य आगात्। इति, तथा मैत्रायणीये, योहवा अस्मि न्नादित्ये निहित स्तारकेऽक्षिणिचैप भर्गाख्य इत्युक्त्वा भर्गोवै रुद्रइतिव विवृतम्

तथाच, यजुष्षु संहितायाम्, चतुर्थकाण्डे शतरुद्रीये- असौ य स्ताम्रइति मन्त्रश्च स्पष्टम्, सूर्यमण्डलमङ्गळमण्डनम् मुग्धेन्दुचूड माह। एवं यजुष्षु महति ब्राह्मणे द्वितीयाष्टके षष्ठेऽनुवाके, आदेवो यातु सविता नुरत्न इत्यारभ्य इमां रुद्राय स्थिरधन्वने गिरः। क्षिप्रेषवे देवाय स्वधाम्ने। अषाढाय सहमानाय मीढुषे। तिग्मायुधाय भरता श्शृणोतु नइति स्पष्टं सूर्यमण्डलम् वर्णयन्ती श्रुतिः तत्रस्वमहिमप्रतिष्ठितं परं रुद्रं स्वामिन मुपसञ्जहार। तथा यजुष्षु रुद्रसंहितासनाथे काण्डे चतुर्थे तथारण्यके उभयतएव गायत्री पठ्यते। तत्र रुद्रमाहात्म्यं विपुल माम्नायते, तथा महोपनिषदिच रुद्रः स्पष्टं स्वा म्युक्तः।

एतेन—छान्दोग्यादौ यथा कप्यासं पुण्डरीकमेव मक्षिणीति वाक्यमवष्टभ्य यद्धरेः मण्डलस्वाम्य मुक्तं त न्निरस्तम्। अत्र प्रतिपादितेषु रुद्रपशुपतीशानप्रभृतिश्रुतिशतसाधितं स्वाम्य मन्यथयितुंनलिङ्गमात्रं वाक्यंवा शक्नुवीत। तस्मा त्सवितृमण्डलस्वाम्यं शिवलिङ्गमेवेति सिद्धम्, देवतान्तरस्य श्रुतौ क्वापि तदधीशत्वानुक्तेश्च। अतएव सूत्रमपि- अन्त स्तद्धर्मोपदेशादिति नपुन स्तच्छब्दादिति, अत स्तत्प्रतिपादकशब्दत्वं नपुण्डरीकाक्षपदे वेदाचार्यसम्मतम्॥

ननु, त्वद्रीत्या पशुपत्यादिशब्दै रन्तरादित्यवर्तित्व मीशस्यकथनादन्तरादित्यविद्यांविषयीकृत्य प्रवृत्तं सूत्रं कुतोनाम तच्छब्दोपदेशादिति नसूत्रित मितिचेत्- उच्यते, यत्रतु तच्छब्दश्रवण स्तत्र शब्दादेव प्रमित इति न्यायेन तेनैव निर्णयसम्भवात् संशयाभावात्, परमेश्वरवाचकशब्दाभावेन ससंशयं छान्दोग्यवाक्यमेव गृहीतं विषयतया तत स्तद्धर्मोपदेशादिति न्याय्यमेव सूत्रितम्। तस्मात् सवितृमण्लस्वाम्य मीश्वरलिङ्गमेवेत्यनवद्यम्।

ननु, छान्दोग्यं, कप्यास म्पुण्डरीकमेव मिवाक्षिणीति वाक्येन आदित्यमण्डलान्तरुपास्यत्वेन तन्मण्डलस्वाम्यं नारायणस्यै वे त्यवगम्यते। पुण्डरीकाक्षत्वरूपलिङ्गस्य अक्षिद्वयवैशिष्ट्यस्यवा शिवेऽसम्भवा दितिचेन्न, पंकजाक्षः पुमान्, पंकजाक्षी नारीतिव्यवहारेण पुण्डरीकाक्षत्वलिङ्गस्य नारायणाऽसाधारणत्वासिद्धेः।

किञ्च, कप्यास म्पुण्डरीकमेव मक्षिणीति त्रिलोचनस्य परमेश्वरस्य लोचनद्वयग्रहणं पुण्डरीकसादृश्यवर्णनार्थमेव न तृतीयलोचनाभाव

द्योतनपरम् । तथाहि, त्रिपुत्रम् ब्राह्मण मुद्दिश्य द्वौ पुत्रा वस्याऽग्नि
ल्यावित्युक्ते द्विसंख्याग्रहणं नशेपपुत्रनिषेधपरम् । किन्तु पुत्रद्वयस्याऽ
सादृश्यनिरूपणपरम् । तद्वदत्रापि कनुदकं रश्मिभिः पिबतीति क
रादित्य स्तेनासितं विकसितं पुण्डरीकं यथा स्फुरति तथा परमेश्वरम्
लोचनद्वयम् । तृतीयं लोचनन्तु मुकुलितस्वभावं विकसितपुण्डरीकसदृ
नभवति । मुकुलितपुण्डरीकसदृशमिति श्रीनीलकण्ठभगवत्पादै रन्तरधिक
णेऽनुगृहीतम् ॥

अतएव, साम्ना नुपनिषदि मैत्रायणीयाख्यायां योहवा अग्नि
न्नादित्ये निहित स्तारकेऽक्षिणि चैष भर्गाख्यः भाभि र्गति रस्यहीत
भर्गः भर्जयतीति हवैष भर्गइति रुद्र इति, तथा पुरस्ताच्च, य एषोऽन्
रादित्ये हिरण्मयः पुरुषइ त्यारभ्य- यएषोऽन्तरे हृत्पुष्करए वाश्रित
त्युक्त्वा तत स्सएषोन्तरं पुष्करएवाश्रितोऽन्न मत्ति सएषोऽग्नि रितिच
श्रुत्यन्तरे तैत्तिरीयादौ- यएषोऽन्तरादित्ये हिरण्मयः पुरुषइत्यादि
प्रतिपादिता मन्तरादित्यविद्या मनूद्य, एकार्थानि पुराणानिवेदाश्चैक
संश्रयाः । इत्यादिदर्शनानुसारेण, अन्तरादित्य दहरवैश्वानराक्षिविद्यादि
सिद्ध तदन्तर्यामिभावं ब्रह्माऽनूद्य रुद्रपदेन भर्गपदेनच सर्वान्तर्यामित्व
सर्वविद्योपास्य श्शिवएवेति निर्धारितम् ।

एवंमहोपनिषदिच, आदित्योवा एष एतन्मण्डलं तपतीति- यए
एतस्मि न्मण्डलेऽर्चिषि पुरुष इति मण्डलाभिमानिनं सूर्य मभिधाय, य
षोऽन्तरादित्ये हिरण्मयः पुरुष इति हिरण्मयं पुरुष मादित्यान्तर्यामि
मुक्त्वा पुनः आदित्योवै तेज ओजो बलं यश इत्यादिना तस्यादित्य

पस्य विभूति मभिधाय- एष पुरुष एष भूताना मधिपतिरिति भूतपति त्वेन तंनिर्दिश्य पुनः कीदृंश इत्याकांक्षायाम् सर्वोवै रुद्र इत्यारभ्य नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतय इ त्युप संहृतम् । अत्र निगदितं भूतपतित्वलिङ्गं पारमेश्वरमेव । ईशान स्सर्ववि द्याना मीश्वर स्सर्वभूताना मित्यादिश्रुत्यन्तरेषु परमेश्वरासाधारणतयाऽवग मात् । तथा, नमोहिरण्यबाहवइत्यनेन हिरण्यश्मश्रु हिरण्यकेश आप्र णखा त्सर्वएव सुवर्णइति छान्दोग्यसिद्धं हिरण्यरूपत्व मनूद्य तद्वस्तु पशुपत्यादिशब्दैः स्पष्टं परमेश्वरएवेति निर्धार्यते । हिरण्यसवर्णत्वम प्य साधारणं पारमेश्वरं लिङ्गमेव, हिरण्यरूप नवमे क्रगुरुद्रम्, पिशङ्गरूप स्सुभरो वयूधाः इत्यादौ श्रुतम् । पञ्चाक्षरध्यानेपि- द्रुतकनक सवर्णमिति । पङ्कजाक्षस्य क्वापि श्रुतौ कनकसवर्णत्वानुक्तेः । सौरमण्डलस्वाम्याकथ नाच, तस्मात् हिरण्यवर्णत्वं शिवलिङ्गमेव । स एषोन्तरादित्ये हिरण्मयः पुरुष इत्यत्र छान्दोग्येपि औपक्रमिकं प्रबलं हिरण्मयत्वलिङ्गंसाशब्यात् तद्वाक्यप्रत्यभिज्ञापित तैत्तिरीयमैत्रायणीय श्रुतिद्वयलब्धाम्बिकापति पशुप त्युमापति रुद्र भर्गादि श्रुतिशतानुगृहीतं पारमेश्वरमेव भवितुमर्हति । अतश्च, औपक्रमिकेण लिङ्गेन प्रत्यभिज्ञाबललब्ध श्रुत्यन्तरस्थित श्रुत्यवि रुद्धेऽर्थे वाक्यं कृत्स्नं समन्वितं कथमिव औपसंहारिकेण पुण्डरीकसदृशा क्षिद्वयवैशिष्ट्यलिङ्गेन श्रुत्यन्तरश्रुतिविरुद्धेऽर्थे समन्वेतुं युज्येत, सर्वत्रापि- उपक्रमप्राबल्यस्य- श्रुतिलिङ्गयो श्श्रुतिप्राबल्यस्यच सम्प्रतिपन्नत्वात् ।

एतेन, हिरण्यबाहुपदं हिरण्यरचिताभरणानि बाहुषु यस्य त्यत्र व्याख्याय, छान्दोग्यप्रत्यभिज्ञापकं हिरण्यरूपपद मपलप्यच, इत्युपनिष

दिति विच्छिन्नप्रकरणत्वा न्नान्वयः । प्रकृतेऽन्तरादित्यविद्याया इत्यपि परोक्तं निरस्तम् । हिरण्मयभूषणघटितबाहुत्वेन कृतस्याऽपव्याख्यानस्य वैश्यपुत्रेऽपि स्वन्वितत्वेन, इत्युपनिषदिति प्रतिप्रकरणविच्छेदे ऽप्येकथा समन्वयव दत्ता प्युपपन्नत्वात् । एवञ्च, पुण्डरीकमेव मक्षिणीति वाक्यं प्रकृतवाक्यार्थरूपं पुण्डरीकसदृशाक्षिद्वयवैशिष्ट्यलिङ्गं वा अन्तरादित्य विद्याया वैष्णवत्वगमकम् अस्माकं तु रुद्र भर्गेशान पशुप त्यम्बिकाप त्युमापति श्रुतयः । हिरण्यरूपत्व भूतपतित्व सौरमण्डलस्वाम्यादि लिङ्ग जातंच त्यस्मदवलम्बितस्य श्रुत्यादिप्रमाणजातस्य भूयस्त्वात् प्रबलत्वात्, परावलम्बितस्याऽल्पीयस्त्वात्, दुर्बलत्वात्, परपरिगृहीतस्य पुण्डरीकसदृ शाक्षिद्वयवैशिष्ट्यरूपलिङ्गस्य साधारणत्वेनाऽस्मदनुकूलत्वात् । अस्मत क्षानुगुणस्य श्रुत्यादिप्रमाणजातस्य कथमपि परै स्वायत्तीकर्तु मशक्य त्वाच्च अन्तरादित्यविद्यायाः पारमेश्वरत्वं दुरपलमित्यनवद्यम् ॥

प्रकृते- अर्थक्रमानुरोधेन धियोयोन इत्यस्यौपक्रमिकत्वपक्षे औप क्रमिकत्वा त्प्रबलया यइतिपुंलिङ्गश्रुत्या भर्गइत्यस्याऽदन्तत्वनिश्चयेन शिवपरत्वंसिद्धम् । अथ पाठक्रमानुरोधेन तत्सवितुरित्यस्यौपक्रमिकत्वाव लम्बनेप्यौपक्रमिकत्वादेव प्रबलेनशिवासाधारणेन सवितृमण्डलस्वाम्यलिङ्गे नच शिवाभिधानपदग्रहणनैयत्येनाऽदन्तत्वसिद्ध्याच शिवपरत्व मक्षतम् । किञ्च, धियोयोनः प्रचोदयादिति धीप्रेरकत्वलिङ्गस्या प्यकारान्तभर्गपदवा च्यनियतत्वेन भर्गइत्यस्याऽदन्तत्वं वज्रलेपायते ॥

ननु, धीचोदकत्वधर्मोऽकारान्तभर्गपदवाच्यनियत इतिकथ मिति चेत् - उच्यते- वेदेपुहि- सनो देव श्शुभया स्मृत्या संयुनक्तु, तगृह

देव मात्मबुद्धिप्रकाशम्, यएकोजालवा नीशः। येनेदं भ्राम्यते ब्रह्म चक्रम्, तथा, धर्मावहं पापनुदं भगेशमिति, तथा शिवसंकल्पासुच, पारमेश्वर्या प्रार्थनया मनस श्शिवसंकल्पत्वं प्रार्थनीयं द्योत्यते, देवतान्तरे बुद्धि प्रेरकत्वं श्रुत्या क्वापि नोक्तम्। पाशुपतब्रह्मोपनिषदिच, स्वतश्शिवः पशु पति स्साक्षी सर्वस्य सर्वदा- सर्वेषान्तु मन स्तेन प्रेरितं नियमेनतु इति दृश्यते। तलवकारोपनिषदिच- केनेषितमित्यादिना धीप्रेरकत्वं जिज्ञास्यं ब्रह्मलक्षण मुपोद्धत्य उपसंहारे हैमवत्युपदेशात्। जिज्ञासितलक्षणस्य ब्रह्मणः निर्णय स्सम्भवदिति प्रतिपादनात्, धीप्रेरकत्व मनितरसाधारणं पारमेश्वरं लिङ्गमुक्तम्। मैत्रायणीयेच, बुद्धयोवै धिय स्ता योऽस्माकं प्रचोदयादिति प्रक्रम्य- एष भर्गइति रुद्रइति चोपसंहारः कृतः। तस्मादोप संहारिकत्वेपि धीप्रेरकत्वलिङ्गस्य चेतननियतत्वात् सान्तशब्दार्थलोकस्य तल्लक्ष्यार्थभूतजडतेजस्सामान्यस्यवा, अथ सवितुपसर्जनस्यवा नसम्भवतीति परामर्शकयच्छब्दोपसृष्टपुंस्त्वाविरोध्यकारान्त स्सिध्यति भर्गः॥ एवञ्च, पुंस्त्वश्रुत्या सवितृमण्डलस्थाम्यलिङ्गेन, धीचोदकत्वलिङ्गेनच शिव वाचकत्वान्यथानुपपत्त्या भर्गइ त्यदन्तइति सिद्धम्, तथा वाक्येनापि तत्वं सिध्यति।

तथाहि, एवंहि श्रूयते- श्रु॥ अक्ता श्शर्करा उपदधाति- तेजोवै घृतमिति- अत्राऽञ्जनकरणद्रवद्रव्यानिर्णये समनन्तरस्तुतस्याऽज्यस्य तत्वेनाऽन्वयो न्याय्यइति, आज्याक्तशर्करोपधानभावनाचोदनाविषयो वाक्यार्थो मीमांसकसम्मतः। तथेहापि भर्गशब्दितं ध्येयं वस्तु किमिति धीचोदना

श्रयताप्रकारकध्यानविषयचेतनविशेषाकांक्षायाम् पूर्वोदाहृतमैत्रायणीयवाक्यात् रुद्र स्योपस्थित्याऽस्याकांक्षानिवर्तिकत्वं वक्तव्यम्। युक्तंचैतत्।

अध्वर्युशाखायां गायत्री चतुर्वारं पठ्यते, सकृत् सव्याहृति ससशिराः त्रि श्शुद्धा, सर्वत्र सा रुद्रमाहात्म्यवचनसंदष्टेति, सन्दंशन्यायेनच गायत्र्या शिवपरत्व मव्याहतं, ब्राह्मणस्यापि वाक्यत्वं तान्त्रिक सम्मतमेव, आर्यम्लेच्छाधिकरणे प्रियंगुपदस्य, यत्रान्या इत्यर्थवादे नार्थ निर्णयात्। तथा प्रकरणबलेनापि भर्गइत्यस्याऽदन्तत्व मनुगतम्, तथाहि अस्य मनुराजस्य, यजुष्षु- आरुणकेतुके, तथाऽग्निकाण्डे चाम्नानं प्रथम काण्डेच सन्दृश्यते। सर्वत्राऽग्नौ विनियोगः। विशेषतश्चाऽग्ने श्चीयमानस्य- रुद्रोवा एष यदग्निरिति श्रुत्या रुद्रतादात्म्याभिधानात्, लोक सिद्धरुद्रपराकारान्तभर्गपदघटितस्यैव तत्रोचितः पाठइ त्यवगम्यते॥

नच, वचना त्त्वयथार्थ मैन्द्रियं स्यादिति न्याया दग्निचयनाग्न्युपस्थानयो र्विनियोगोऽय मयथार्थो भवतीति वाच्यम्, यथैन्द्र्या स्तद्दैवत्यं श्रुतिमुखप्रमाणान्तरलब्धं नैव मस्य सान्तभर्गपदघटितत्वं केनापि प्रबलप्रमाणेन लब्धम्। श्रुति रेकैव प्रमाणीभूता साधये त्समीहित मर्थम्। इहतु श्रुतिश्च, लिंगञ्च, वाक्यञ्च, प्रकरणञ्चेति प्रमाणानां चतुष्टय मुपादितम्॥

नु, भर्गदेवस्य धीमही त्यत्र धीमहिक्रियाकांक्षितकर्मसमर्पक द्वितीयविभक्तिघटितपदस्यै वोचितत्वेन सान्तत्वाभ्युपगमपक्षएव न्याय्य इतिचे न्न। उपक्रमगतेन तदित्यनेनैव धीमहिक्रियाकांक्षानिवृत्तेः। सुपां सुलुगितिविहितविभक्तिव्यत्ययेनवा तदाकांक्षानिवृत्तेस्सुगमत्वाच्च॥

अतएव, सर्वासु गायत्रीपु द्वितीयपादे अद्वितीयाविभक्तेरेव निर्देशः कर्मबोधकपदस्य। तथा, तृतीयपादगतयत्सदावकाशेच तत्तद्गा यत्रीदेवतावोधकासाधारणपदनिवेशश्च दृश्यते। यथा- तत्पुरुषायविद्महे महादेवाय धीमहि तन्नो रुद्रःप्रचोदया दित्यादिपु॥

अथ समाख्या प्यस्मदनुकूला, तथाहि, सावित्रीसमाख्याऽस्य मन्त्रस्य सिद्धा। तच्च सवितृस्वाम्य मैशं लिंगमिति निर्णीतम्। गायत्र्याश्च ब्रह्मविद्याया नसम्भवति केवल मादित्यः परमार्थः। तस्मात् श्रु॥ यस्या दित्य श्शरीरमिति श्रुत्या सवितु रन्तर्यामितयाऽऽम्नातः परमेश्वरएव। इतोऽपि परमेश्वरवाचकतया प्रकृतं भर्गइति पद मदन्तमेवेति सिध्यति॥

ननु, यइति सविता परामृश्यताम्, य स्सविता नो धियः प्रचो दयात् तस्य सवितु र्देवस्य वरेण्यं तत् भर्गः धीप्रेरकत्वरूपं तेजः धीम हीति व्याख्याने नकोऽपि बाधः। यो देव स्सविताऽस्माकं धियो धर्मा दिगोचराः प्रेरय त्यस्यय द्भर्ग स्तद्वरेण्य मुपास्महे इति स्मृत्या तथैव विवरणात् युक्त स्सपन्था इतिचे न्न, यत्तदो श्श्रुतयो स्सम्भवति सामा नाधिकरण्ये तदपहाय यत्तदीच पदे अध्याहृत्य वाक्यार्थवर्णनस्य क्लिष्ट तरत्वात्, उदाहृतनानाश्रुतिविरोधा दुक्तस्मृतेश्च विरोधाधिकरणविपयीकर णाच्च। पररीत्या, तत्सवितु र्वरेण्यमि त्युपक्रमे प्रथम मादित्यमण्डलस्वा म्यस्य ब्रह्मलिंगत्वेन दर्शनात्। तच्च स्वन्वय मकारान्तएव नसान्ते, सान्तेहि सवितुरिति षष्ठी स्वामिनं बोधयेत्। स्वंच भर्ग स्यात्। वरे ण्यंच विशेषणम्, सवितुर्वरेण्यमि त्यनयो स्सन्नियोगशिष्टयो रनन्वयः। वरेण्यपदस्य भर्गोविशेषणत्वात्। भर्गश्शब्दस्याऽऽलोकपरत्वे नाचेतन

त्वात् । चेतनधीप्रेरकत्वचेतनध्येयत्वाद्ययोगा त्तदुपपत्तये लक्षणया परमप्र काशः पारमेश्वर स्तदर्थः कल्प्यः । तदात्वेच तस्याऽनन्यशेषत्वात्सवि तृस्वत्वं शाब्दं बाधितमितिपष्ठ्या अभेदोऽगतिकगतिक स्स्वीकार्यः । तन्मात्रादपि नेष्टसिद्धिः । सवितृशब्दस्य लोकसिद्धिरूढित्यागपूर्वं लक्षण या- केवलयोगेनवा परमात्मा पदार्थो वाच्यः । इति नानावैदिकप्रमाण बाधनं, कोशप्रामाण्यबलादिति सान्तपक्षस्य दूपितत्वं पर्वतव दविक म्प्यम् ॥

नच, भर्ग इत्यस्यादन्तत्वे तदितिक्लीवं बाध्येतेतिशंक्यम्, तदि त्यस्य परब्रह्मपर्यायतयाऽव्ययत्वेन निर्बाधात् ।

अतएव भगवान् योगयाज्ञवल्क्यः —

श्लो ॥ देवस्य सवितु र्मध्ये यो भर्गो नो धियः क्रमात् ।

प्रचोदये त्तद्वरेण्यं धीमही त्यन्वयक्रमइत्यन्वयक्रमं निर्णीत वान् । विस्तरस्तु गुरुचरणकृतौ गायत्रीरक्षायां द्रष्टव्यः ॥

एवं सर्ववेदमातृभूतसावित्रीप्रतिपाद्यतया भर्गपदवाच्य शिवएव सर्ववेदवेद्य इति सिद्धम् । तस्मात्- गायत्रीमनुशाब्दबोधवशतइति युक्त मुक्तम् ॥

## यज्ञाधिपतित्वनिर्णयः

तथा—सू ॥ त्रिभि र्वेदै र्विधीयतइति हिरण्यकेशोक्त्या सर्ववे विहितस्य यज्ञस्याऽधीश्वरत्वादपि शिवस्यैव वैदिकजनसेव्यत्वंसिध्यति

ननु, श्रु ॥ यज्ञोवै विष्णुरितिश्रुते र्नारायणस्यैव यज्ञरूपत्वश्र णेन तदधीश्वरत्वमपि तदीयमेवेतिचे न्न । श्रु ॥ गाथपतिम् मेधपतिं रु

जलापभेषजमिति श्रुत्या यज्ञपतित्वस्य शिवैकविषयत्वाम्नानात् । नच, सामा न्यत शिवस्य मेधपतित्वश्रवणेपि विशिष्य सोमादिहविषा मीश्वरशेषत्वा नवगमा त्तदधीशत्वं तस्य नसिध्यतीति वाच्यम् । श्रु ॥ अयं सोमः कपर्दिनइति सोमस्य- श्रु॥ इमं पशुं पशुपतेते अद्य बध्नामीति पशोः- रौद्रं गवीति पयोदधिघृतलक्षणानांच हविषा मुत्पत्ति मारभ्य रुद्रसम्बन्धित्वाव गमेन शिवस्यैव यज्ञेश्वरत्वसिद्धेः । ननु, श्रु ॥ अयं सोमः कपर्दिनइति श्रुत्या सोमस्य ईश्वरसम्बन्धित्व स्योत्पत्तिसिद्धत्वेपि तस्य होमावस्थायां तत्सम्बन्धित्वाश्रवणा त्तदधीश्वरत्वं नसिध्यतीतिचे न्न । अग्निष्टोमेन यक्ष्यइति संकल्पादारभ्य- यज्ञतनुं विभज्य- श्रु ॥ रुद्र आहुतइति श्रुत्या सोमाहुतेः रुद्रभागत्वाम्नानेन सोमस्य रुद्रदेवताकत्वावधारणात् । नच, यज्ञीयहविषां रुद्रदेवताकत्वावगमेपि यज्ञशिष्टस्य द्रव्यस्य रुद्रस्वामि त्वाश्र वणेन सर्वयज्ञेश्वरत्वं नसिध्यतीति वाच्यम्, यजुषि- श्रु ॥ मम भिमा नि त्यब्रवी न्नवै तस्य तईशत इत्यब्रवी द्यज्ञवा स्तौ हीयते ममचैतदिति हीयतइ तीश्वरवाक्येन । बह्वृचब्राह्मणे । जितान्वा एष देवेभ्यो वदत ममवा इदं ममैवास्तु हीनमिति श्रवणेनच यज्ञपरिशिष्टस्या पीश्वरदेवता कत्वावगमेन तस्यैव यज्ञेश्वरत्वावधारणात् ।

ननु, सोमयागस्य कपर्दिदैवत्यत्वश्रवणेन तस्य तदीश्वरत्वावगमेपि सर्वयज्ञेश्वरत्वं न सिध्यतीतिचेत्—उच्यते श्रु॥ आवो राजान मध्वरस्य रुद्रमिति श्रुत्या-पयोदधिघृतलक्षणहविस्साध्याना मौपासनादिसप्तपाकयज्ञा नां, सोमहविस्साध्यानां-सप्तसोमयज्ञानां पकचरुसाध्याना मग्न्याधेयदर्श पूर्णमासादीनां हविर्यज्ञानां च रुद्रस्वामित्वाम्नानेन तस्य सर्वयज्ञेश्वरत्वस्य

दुरपह्नवत्वावगमात् । एवञ्च, सर्ववेदविहितयज्ञाधिपतित्वावगमेनापि शिव स्यैव वैदिकजनसेव्यत्वमिति सिद्धम् ॥

## नमश्शेपित्वनिर्णयः

शेपित्वा न्नमसामिति, नमश्शेपित्वादपि महेशितुरेव सर्वेश्वरत्व वगमेनतस्य वैदिकजनसेव्यत्व मविप्रतिपन्नम् । तथाहि-श्रु॥ यस्मै नमस्तस्मै त्वाजुष्टंनियुनज्मीति श्रुतिः पशुपतिमेव नमस्विन मनूद्य-तस्मै पशो नियोजन मुवाच, एवम् श्रु॥ यस्मै नम स्तच्छिरइति श्रुतिरपि दिव्यशिशुमारशिरो रूपत्वेन शिवमेव निर्दिशन्ती नमश्शेपिणं निरणैपीत्। तस्मा न्नमस्व मित्व मीशितुरेव लक्षणमिति स्पष्ट मवगम्यते ।

ननु पशुनियोजनमन्त्रस्य शिवपरत्वे तत्रानूद्यमानस्य नमश्शेपित्वस्य तल्लक्षणत्वं सिध्येत्,तस्य शिवपरत्वानवधारणेन नमश्शेपित्वस्य तल्लक्षणत्व मसिद्ध मितिचे न्न, पशुनियोजनमन्त्रस्य शूलगवाख्ये कर्मणि विनियुक्तत्वेन तस्यच कर्मणः पौर्वापर्यपर्यालोचनाया मीश्वरपरत्वावगमात् । तथाहि शूलगवाख्यंहि कर्म बोधायनाश्वलायनाभ्यां विहितम् । शूलोऽस्यास्तीति र्शआद्यच्प्रत्ययेन शूलपदस्य रुद्रवाचकत्वेन रुद्राय यो गौः पशुरिति व्युत्पत्या शूलगवस्य रुद्रदेवताकत्व मवगम्यते ।

किञ्च मन्त्रलिङ्गादपि शूलगवाख्यंकर्म रुद्रदैवत्यमेवेति विज्ञायते तथाच, ईशानाय त्वा जुष्ट मुपाकरोमि, ईशानाय त्वा जुष्टं प्रोक्षामि ईशानाय त्वा भुवनाना मधिश्रयं, भवाय देवाय स्वाहा, इत्यादयो बोधायनोक्ता मन्त्राः । तथा, रुद्राय महादेवाय जुष्टोपथस्वेति, हराय कृशानु शर्वाय भवाय महादेवा योग्राय पशुपतये रुद्राय शङ्करा येशाना योशन

स्वाहेति या स्ते पूर्वस्यां दिशि सेना स्तेभ्य स्तव नमस्ते अस्तु मामाहिग्ं सीरिति, कद्रुद्रायेमारुद्राय यातेपितरिमारुद्रायेत्याश्वलायनोक्ता श्चाखिला मन्त्रा श्शिवं प्रतिपादयन्ति । तद्धितेन चतुर्थ्याच मन्त्रवर्णेनचेष्यत इति मन्त्रवर्णेन शूलगवस्येश्वरदेवताकत्वनिश्चयात्तत्र विनियुक्तस्य पशुनियोजनम न्त्रस्यापीश्वरपरत्वेन तदुक्तं नमश्शेषित्व मीश्वरस्यैव लक्षण मितिविज्ञायते

नन्वु, श्रु॥ यस्मै नम स्तच्छिर इतिश्रुतौ शिरस्त्वे नोद्दिष्टदेव ताया अनिर्धारणेन रुद्रस्यैव नमश्शेषित्व मितिनसिध्यतीति चे न्न, श्रु॥ यस्मै नम स्तच्छिरो धर्मो मूर्धा ब्रह्मोत्तरा हनु र्यज्ञो दक्षिणा हनु र्विष्णु र्हृदयँ संवत्सरः प्रजनन मश्विनौ पूर्वपादा वत्रि र्मध्यं मित्रावरुणा वपर पादावग्निः पुच्छस्य प्रथमं काण्डम् तत इन्द्र स्ततः प्रजापति रभयं चतुर्थं स वा एष दिव्य श्शाकर श्शिशुमार इति तैत्तिरीयश्रुतौ शिशुमा रात्मकतया निरूपितस्य कश्यपस्य शिरोव्यतिरिक्तेषु मूर्धोत्तराहनु रधरा हनु हृदय प्रजोत्पदकेन्द्रिय पूर्वपाद मध्यापरपादपुच्छ प्रथमकाण्ड द्वितीय कांण्ड तृतीयकाण्ड चतुर्थकाण्डात्मेषु धर्मब्रह्मयज्ञविष्णुसंवत्सराश्विन्यत्रि मित्रावरुणाग्नीन्द्रप्रजापत्यभयब्रह्मरूपदेवतात्मकतयास्तुतेषु रुद्रस्यैव परिशि ष्टतया शिरसो रुद्रात्मकत्वावगमेन तत्र विशेषितस्य नमश्शेषित्वस्य तदी यत्वावधारणात् ॥

नच, सूर्यादीनामपि परिशिष्टत्वेन शिशुमारशिरसो रुद्रात्मकत्वा नवधारणा न्नमस्स्वामित्वं तदीयमिति नसिध्यतीतिवाच्यम् । श्रु॥ स्तोमंवो अद्यरुद्राय शक्वसे क्षयद्वीराय नमसा दिदिष्टनइति मन्त्रेण रुद्रस्यैव नम स्स्वामितया स्फुटावगमा त्तस्यैवाऽत्रापि परिशिष्टतान्यायेन ग्रहणोचित्यत् ।

तथा, श्लो॥ वज्रिण्या मुद्रया शक्रं पद्मिन्या दर्शये द्विधिम्, शंखिन्याकेशवं रुद्रंशिरस्यञ्जलिमुद्रया। इतिभरतमहर्षिणापि नमस्स्वामित्वस्य रुद्रलक्षणत्वेन निर्धारणाच्च तस्य तदीयत्वमेव सिध्यति॥

ननु, श्रु॥ नमो ब्रह्मणे नमोअस्त्वग्नये नमःपृथिव्यै नम ओषधीभ्य इत्यादिना श्रुतिषु देवतान्तरेभ्योपि नमसां विधीयमानतया दृष्टत्वेन नमश्शेषित्वं न रुद्रस्य सिध्यतीतिचेन्न, श्रु॥ स्तोमंवो अद्यरुद्राय शक्से। क्षयद्वीराय नमसा दिदिष्टन। एभि शिव स्स्ववा पवयावभि श्शिपक्ति स्वयशानिकामभिरिति मन्त्रेण देवतान्तरेभ्यो दत्तानामपि नमसा मीश्वरगामित्वश्रवणान्नमस्स्वामित्वस्य शिवलिङ्गत्वावधारणात्।तथाहि, हेमरुतः,स्तोमं=स्तोत्रं-वः=युष्माकं शक्से=शक्ताय-निग्रहानुग्रहक्षमाय, क्षयद्वीराय=क्षयं कुर्वन्तो वीरभद्रादयो गणा यत्र-तस्मै, रुद्राय, नमसा=नमस्कारेणसह, दिदिष्टन=प्रयच्छत, एभि=स्तुतिनमस्कारैः- स्ववा—स्वामी-स्वयशाः—अनन्यसाधारणयशाः-पवयावभि;—पवाः-पतव्याः कामा स्तेपुयावभिः—आपतद्भिः कामेकामे समापतद्भि रित्यर्थः, निकामै स्स्तवैः दीव्यन्तीति देवान् युष्मान् शिपक्ति संयोजयति, अयम्भावः-हेमरुतः, युष्मदुद्देशेन अस्माभिः क्रियमाणानि नमस्स्तोत्राणि रुद्राय प्रयच्छत, यै स्स्तुतिनमस्कारै स्स्ववा मीश्वरः तदपेक्षितैः कामैः देवान् भवादृशान् संयोजयतीति, तस्मा दन्यविषयाणामपि नमसा मीश्वरएव पर्यवसान नित्याम्नातत्वेन नमस्स्वामित्व मीश्वरलिङ्ग मित्यवगम्यते

अतएव—श्लो॥ दत्तं नमः किमपि शुश्रुम देवताभ्यः
स्त्वा मन्तरेण नमसा मवसानभूमिम्।
ता स्तद्ग्रहीतु मनलं नहि कश्चि दीष्टे

चोरोपनीतमिव धारयितुं किरीटम् ॥
इति श्रीसुदर्शनाचार्यचरणैरुक्तम् ।

ननु, आकाशात्पतितं तोयं यथा गच्छति सागरम् । सर्वदेव नमस्कारः केशवं प्रतिगच्छतीति केशवस्य नमस्कारपर्यवसानभूमितोक्ता कथं सङ्गच्छेतइतिचेन्न । तस्या स्स्मृतेः प्रकृतोदाहृतबहुश्रुतिविरुद्धत्वेन औदुम्बरी सर्वावेष्टयितव्येति स्मृतेरिव विरोधाधिकरणविषयत्वेन शङ्करं प्रति गच्छतीति पाठस्यैव वेदसम्मतत्वसिद्धेः ॥

## प्रणवार्थ निर्णयः

तथा—प्रणवेति—सर्ववेदानां प्रणवमूलत्वेन प्रणववाच्यत्वादपि शिवस्य सर्ववेदप्रतिपाद्यत्वं सिध्यति। तथाहि—श्रु॥ यो वेदादौ स्वरः प्रोक्तो वेदान्तेच प्रतिष्ठितः। तस्य प्रकृतिलीनस्य यः पर स्स महेश्वर इति प्रणवस्य महेश्वरपरत्व माम्नातम् । अतएव अथर्वशिखायां महेश्वर महादेवादिनामभि स्साक मोङ्कारप्रणवादीन्यपि नामा नीश्वराभिधानतया निरुक्तानि, ततएव—सू॥ क्लेशकर्मविपाकाशयै रपरामृष्टः पुरुषविशेष ईश्वर इत्युक्त्वा तस्य वाचकः प्रणवइति प्रणव स्येश्वराभिधानता निश्चिता भगवता पतञ्जलिना। आतश्च—प्रणव स्तस्य वाचक इत्यादिपुराणवचनान्यपि सङ्गतानी त्यलम् ॥

## पुरुषसूक्तार्थ निर्णयः

एवं शिवस्य सर्ववेदभागस्वरसतात्पर्यविषयत्वेपि पुंसूक्तं नारायणपर मित्येवंरूपपरकीयाभिमानापनोदनार्थ माह—पुंसूक्तेति ॥

ननु, श्लो॥ पुरुसंज्ञे शरीरस्मि न्शयना त्पुरुषो हरिः, शक रस्य पकारोऽयं व्यत्यासेन प्रयुज्यते। तथा पुरुषशब्दोयं वासुदेवेऽवति ष्ठते। तं विना पुण्डरीकाक्षं कोऽन्यः पुरुषशब्दभाक्। सएव वासुदेवोऽयं साक्षा त्पुरुष उच्यते। भगवानिति शब्दोऽयं तथा पुरुषइत्यपि, निरुपा धीच वर्तेते वासुदेवे सनातन इत्यादिपुराणवचनजातेन पुरुषशब्दस्य विष्णुपरत्वावधारणा त्तस्य चात्र प्रतिपाद्यत्वावसायेन पुरुषसूक्तस्य नशिवपरत्वाशावकाश इतिचे न्न। प्रथ्रशब्दस्य रथन्तरे शक्तिग्राहयताऽ र्थवादेनेव पौराणिकवचनैः पुरुषशब्दस्य रमाकान्ते शक्ति कचि त्प्रकरणे साधयद्भिरपि पुरुषोवै रुद्र इत्यादिश्रौतवचनैः पुरुषशब्दस्य भगव त्युमा कान्ते रूढ्यवगमेन पुरुषसूक्तस्य शिवपरत्वौचित्यात्। नचैवंपुरुषशब्दस्य शिवकेशवसाधारणत्वे नैकत्र शक्त्यनिर्णया च्छिवपरत्वं ननिश्चितमिति शंक्यम्। पौराणिकव्यवहारा च्छ्रौतव्यवहारस्य प्रबलतया श्रौतव्यवहारेण पुरुषशब्दस्य शिवपरत्वेनिर्णयेनाऽस्य सूक्तस्य शिवपरत्वावधारणात्। पुरु षोवै रुद्रइत्यत्र एवार्थेन वैशब्देन रुद्रस्यैव पुरुषपदवाच्यत्वनिर्णयाच्च।

ननु, पुरुषोवै नारायणोऽकामयतइत्यादिना नारायणेपि श्रौतव्यव हारेण पुरुषशब्दस्य विनियोगदर्शनेनाऽस्य पदस्य शिवपरत्व मनिर्णीत मितिचे न्न। पुरुसंज्ञकशरीरशयनत्वोपाधिनाऽस्य पदस्य कचि न्नारायणे श्रौतव्यवहारस्य सत्वेपि-यत्र कर्मश्रेयोवा यज्ञश्रेयोवा तत्र पुरुषं चिन्तयन् पुरुषसूक्तं ब्रूयात्, पूर्णत्वा त्पुरुषइतिहि विज्ञायतइति वाधूलसूक्तेन-नेनेदं पूर्णं पुरुषेण सर्व मित्याम्नानेन पूर्णत्वोपाधिना पुरुषपदस्य शिवासाधारण्य त्वावगमात्॥

नच, पूर्णत्वोपाधिना पुरुषशब्दस्य शिवपरत्वं नप्रमितमितिवाच्यम् श्रु॥ वृक्षइव स्तब्धो दिवितिष्ट त्येक स्तेनेदं पूर्णं पुरुषेण सर्वमिति मन्त्रेण, श्लो॥ ईशो वृक्षइव स्तब्धो यएको दिवि तिष्ठति। ते नेद मखिलं पूर्णं पुरुषेण महात्मना। इत्यादिपौराणिकवचनोपबृंहितेन। पुरुषोनाम सम्पूर्ण शिव स्सत्यादिलक्षणः। साम्बमूर्तिधरो नान्यो रुद्रोऽजो विष्णुरेववा, इत्यादिपुराणनिर्णयेनच पूर्णत्वप्रवृत्तिनिमित्तकस्य पुरुषशब्दस्य शिवएव वाच्यइति प्रमितत्वात्, ननु, आरुणकेतुके चयने कूर्मोपधानार्थवादे श्रु॥ भूतँ सर्पन्त मित्याद्युपक्रम्य कूर्माकृतिलिङ्गोपस्था प्यस्य भगवतो विष्णोः हिरण्यगर्भम्प्रति पूर्वमेवाऽह मिहासमिति वचनं प्रदर्श्य तत्पुरुषस्य पुरुषत्वमिति पुरुषशब्दस्य प्रवृत्तिनिमित्तमभिधाय ततः परं प्रवृत्तेन श्रु॥ सहस्रशीर्षा पुरुष स्सहस्राक्ष स्सहस्रपा द्भूत्वोदतिष्ठदिति वचनेन पुंसूक्ते प्राथमिकानां सहस्रशीर्षादीनां पदानां चतुर्णां हरिपरत्वावग मेन सूक्तमान्तं तत्परमेव किंनस्या दितिचे दुच्यते, अत्र यद्यपि हिरण्य गर्भं प्रति हरिणा पूर्ववामे नोपाधिना पुरुषत्वं स्वस्मि न्प्रतिपादितम्। तथापि—प्रकृतसूक्ते पूर्वोक्तवाधूलसूक्तादिवचनावगमितपूर्णत्वोपाधिना पुरु षशब्दवाच्यस्य शिवस्यैव प्रतिपाद्यत्व मवगम्यते। अतएवोत्तरऋचि— पुरुषएवेदँ सर्वमिति विद्यते। अस्यच श्रु॥ सर्वोवै रुद्रइति विवरणं च संगच्छते॥ अतश्च तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदया दित्यादिना शिवस्यैव पुरुषपदवाच्यत्वरूपो वैदिकव्यवहारश्च सङ्गतो भवति॥

नच, रुद्रगायत्र्यामिव पुरुषशब्दस्य दन्तिगायत्र्यादावपि श्रवमा

णत्वेन तस्य शिवपरत्व मसिद्धमिति वाच्यम् । विष्णुनरसिंहादिगायत्री वर्जं परशिवतत्परिवारभूतदन्तिषण्मुखनन्दिगरुडादिगायत्रीष्वेव तदाम्नानेन पुरुषपदस्य शैवत्वनिश्चयात् ॥

ननु गरुडस्य नशैवत्वं प्रमितमिति चे न्न, तस्य मन्त्ररहस्येषु पारमेश्वरत्वस्य प्रसिद्धत्वात् । हेलापुरप्रान्ते वैनतेयक्षेत्रे वैनतेयप्रतिष्ठित वैनतेयेश्वरलिङ्गस्य प्रत्यक्षसिद्धत्वेन तस्य शैवत्वावधारणाच्च ॥

एवञ्च पुरुषोहवै नारायण इत्यादौ क्वचि त्पुरुषशब्दस्य नारायणे व्यवहारस्य विद्यमानत्वेऽपि श्रु॥ पुरुषोवै रुद्र स्सन्महोनमः पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि । महा न्प्रभुर्वै पुरुष स्सत्वस्यैष प्रवर्तक इत्यादिना भूयसो वैदिकव्यवहारस्य विद्यमानत्वेन सू॥ विप्रतिपत्ते भूयसां स्यात्स्वधर्मत्वमिति न्यायानुरोधेन पुरुषपदस्य शिवपरत्वनिर्णये प्रकृत सूक्तस्य शिवपरत्व मविशङ्कम् ॥

अपिच, पुरुष स्सहस्राक्षइति पुरुषपदसहचरं सहस्राक्षपदमपि भवति पुरुषपदस्य शिवपरत्वनिश्चायकम् । तथाहि, पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि, नमोअस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे। अवतत्य धनु स्त्वं सहस्राक्ष शतेषुधे । सहस्राक्ष मतिपश्यं पुरस्तात् इत्यादिना भूयसा वैदिकव्यवहारेण सहस्राक्षपदस्य शिवपरत्वौचित्यात् ॥

नच, सहस्राक्षपदं महेन्द्रवाचकतया लोकव्यवहारावगतमिति वाच्यम्, तस्य क्वचि दिन्द्रवाचकत्वेपि परब्रह्मप्रकरणेषु महेन्द्रस्याप्रसक्त्या परमेश्वरपरत्वस्यैव प्राकरणिकत्वात् । तस्मा त्पुरुषपदस्य वैदिकरूढ्या शिवपरत्वनिर्णयेनाऽस्य सूक्तस्य शिवपरत्व मविचलम् ॥

ननु अथातो महादेवस्य महापुरुषस्यवाहरहः परिचर्याविधिं व्याख्यास्याम इत्यादिबोधायनादिसूत्राद्यवगमिततन्नामभावस्य महापुरुषशब्दस्य पुरुष म्महान्तमिति सूक्तमध्ये आम्नानेन प्रकृतसूक्तस्य नारायणपरत्वौचित्या न्नशिवपरत्वनिश्चय इतिचे दुच्यते —यद्यपि महापुरुषशब्दस्य विद्यते लौकिकी रूढिः पङ्कजाक्षे। तथापि नसा व्यस्तयो र्महापुरुषशब्दयो स्सिध्यति । पुरुषशब्दस्य परमेश्वरविषयकरूढे र्वेदसिद्धत्वस्य पुरस्ता न्निरूपितत्वेन महापुरुषशब्दस्यापि तद्विषयत्वं न प्रच्यवति। किञ्च महच्छब्दोऽयं परमेश्वरे रूढः ॥

तथाहि, अथर्वशिरसि अथकस्मा दुच्यते महादेव इत्युपक्रम्य-तस्मा'दुच्यते महादेवः, तस्मा दीशानो महादेवो महादेवइति महोपनिषद्वचनेन ब्रह्मदत्तेषु नामसु भवादि ष्वष्टसु महानिति नाम्नः परिगणनेन, तथा, भगवता बोधायनेन शिवाराधने ब्रह्मयज्ञतर्पणेऽन्यत्रच भवादिनामतुल्ययोगक्षेमतया महानिति नाम्नः परिगणनेन, तथा, सत्यापाढहिरण्यकेशेन शूलगवे प्रधानाहुत्यष्टके भवादिनामक्रमेण विनियोगेन। एवं स्मृतिषु शिवाराधनप्रकरणेषु पुराणेषु चाऽसंख्याततया दर्शनेनच महच्छब्द श्शिवे रूढइ त्यवगम्यते॥

नच, महादेवइति समुदितस्यैव कोशादिषु शिवाभिधानतया दर्शनेन महानिति कथं परमेश्वरं बोधयेदिति शंक्यम्। भीमसेनभीमशब्दयोरि वोभयोरपि प्रमाणबला च्छिवपरत्वस्य प्रमाणसिद्धत्वात्॥

ननु, भगवता बोधायनेन अथातो महादेवस्य महापुरुषस्यवाऽहरहः परिचर्याविधिं व्याख्यास्यामइति महादेवशब्देन रुद्रस्यैव महा

पुरुषशब्देन विष्णोरेव वाच्यत्वबोधनेन-उभयानुगते महच्छब्दे देवपुरुषान्य तरशब्दसाहचर्यस्यैव देवताविशेषविनिगमकत्वेन प्रकृते रुद्रपरत्वे विनि गमकस्य देवशब्दस्याऽभावात्। सत्त्वाच्च हरिपरत्वविनिगमकस्य पुरुषशब्दस्याऽस्य सूक्तस्य हरिपरत्वमेव न्याय्य मितिचे न्न, प्रक्रमविरो धात्। पूर्वोक्तप्रमाणैः केवलस्य महच्छब्दस्य पारमेश्वरत्वाप्रच्यवात्, इह महापुरुषशब्दस्याऽदर्शनाच्च ॥

नापि, पुरुषं महान्तमिति व्यस्तयो र्महत्पुरुषशब्दयो श्श्रवणा द्धरिबोध स्सुलभइति शंक्यम्, पङ्कजादिपदानामिव रूढ्युन्मेषकशक्त तावच्छेदकानुपूर्वीभङ्गेन व्यस्तेन रूढ्यर्थबोधानुपपत्तेः ॥

नचालुगिह छान्दसः कल्प्यः। तथात्वनिश्चयकप्रमाणाभावात् तत्प्रतिबन्धस्य पुरुषं महान्तमिति क्रमभङ्गस्य दर्शनाच्च ॥

एवञ्च, पुरुषं महान्त मित्यनेन विष्णुपरत्वभ्रमो निरस्तः ॥

ननु ह्रीश्च ते लक्ष्मीश्च पत्न्याविति लक्ष्मीपतित्वश्रवणेन लक्ष्मी पतित्वलिङ्गस्य नारायणासाधारणत्वेनच नारायणस्यैव पुंसूक्तप्रतिपाद्यत्वा वगमेन न गौरीपते स्तत्प्रतिपाद्यत्वं सिध्यतीतिचे न्न। अत्रोपक्रमे ह्री रिति गौर्यसाधारणस्य नाम्नो ह्रींकारस्य श्रवणेन लक्ष्मीपदस्यापि तत्प त्वावसायात्। अतएव श्लो॥ तस्याङ्कमण्डलारूढा शक्ति र्माहेश्वरी पर महालक्ष्मीरिति ख्याता श्यामा सर्वमनोहरा॥ इति वायूक्तं सङ्गच्छते एवञ्च, लक्ष्मीपतित्वलिङ्गं न पुंसूक्तस्य विष्णुपरत्वसाधकमिति व्यक्तम्।

नच, लक्ष्मीपदस्यापि भवानीपरत्वे पत्न्याविति द्विवचन मसंग निति वाच्यम्, पराशक्ते र्नानाविधत्वेन द्विवचनस्याऽस्मत्पक्षेऽविरुद्धत्वात्।

ननु, नारायणसमाख्याया विष्णुपरत्वनिर्णायकत्वेन नाऽस्या शिव परत्व मुचितमितिचे न्न, नारायणपदव्यवहारस्य नारायणाख्येन केनचि दृषिणा दृष्टत्वादिति माधवीयवचनेन, सहस्रशीर्षा षोडशनारायणः पौरुष मिति यास्कवचनेन, नारायणदृष्टेन पुरुषसूक्ते नोपचिताच्चिति मित्यादि चाधूलवचनेनच, प्रतिपाद्यदेवतायाः पुरुषपदेन, पुंसूक्तद्रष्टुः ऋषेः नारा यणपदेनच व्यवहारस्याऽवगमेन नारायणसमाख्याया विष्णुपरत्वसाधक त्वाभावात् ॥

ननु, आथर्वणाष्टादशमहाशान्तिप्रकरणे वैष्णव्यां शान्तौ विनि योगेन, विष्णुपूजासु विनियोगेनच, विष्णुपरत्व मस्याऽवगम्यत इतिचे न्न-सर्वदेवतात्मकपुरुषप्रतिपादकस्याऽस्य सूक्तस्य सर्वासु देवतासु विनि योगस्य युक्तत्वेन श्लो॥ यजे त्पुरुषसूक्तेन धनदं विश्वरूपिण मित्यस्य धनपत्याराधनेपि विनियोगस्य स्मृतत्वेन, शिवपूजादावपि विनियोगस्य स्मृतिकल्पपुराणेषु दृष्टत्वेनच तावता शिवपरत्वाप्रच्युतेः ॥

नच, वैष्णव्यां संहिताया मस्याः परिगणनेन, पुंसूक्तप्रक्रियया विष्णुपुराणे विष्णुस्तुतिदर्शनेन चास्य विष्णुपरत्व मवगम्यत इतिवाच्यम्, एवं शिवपुराणेषु परमेश्वरेपि स्तुतिदर्शनेनाऽसाधकत्वात् ॥

एवञ्च, स्वपक्षसाधकतया पराभिमताना मष्टानामपि हेतूनां दुष्टत्वस्य निरूपितत्वेन शिवपरत्व मस्याऽव्याहतम् ॥

अथाऽस्य शिवपरत्वे प्रबला हेतवो निगद्यन्ते चतुर्दश, तथाहि पुरुषशब्दश्रुतिः, सहस्राक्षपदश्रुतिः, ईशानशब्दश्रुतिः, महदभिख्याश्रुति श्चेति श्रुतिचतुष्टयम् । सहस्रशिर्षत्वलिङ्गम्, शीर्ष्णो द्यौरिति व्योम

केशत्वलिङ्गम्, आदित्यवर्णत्वलिङ्गम्, पुरस्ता द्वात्रुदाहृतत्वलिङ्गम्, विद्वदिन्द्रज्ञानविषयत्वलिङ्गम्, ह्लेयाख्यद्दीपतित्वलिङ्गम्, अहोरात्रात्मक पार्श्वद्वयपरिमिण्ड तार्धनारीश्वराख्य कृष्णपिङ्गलत्वलिङ्गम्, अश्विन्यादि नक्षत्रमालारूपत्वलिङ्गम्, चेति लिङ्गाष्टकम्, वेदाहमिति भगवन्नरायण ज्ञानविषयत्वलिङ्गम्, श्रु॥ उमासहायं परमेश्वर म्प्रभुम् त्रिलोचनं नील कण्ठं प्रशान्तम्, ध्यात्वा मुनि र्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तादिति, नान्यः पन्था विमुक्तयइति, नान्यः पन्था अयनायविद्यते, सर्वाननशिरोग्रीव स्सर्वभूतगुहाशयः, सर्व्वव्यापीच भगवान्। तस्मा त्सर्वगतश्शिवइतिच कैवल्यश्वेताश्वतरमन्त्रतदर्थप्रत्यभिज्ञानद्वयम्, अथ परमेश्वरपूजायां विनियोगः, प्रकृतसूक्तदृष्टप्रक्रियया पुराणेषु परमेश्वरस्तवइत्यादिकंचाऽपरं हेतुजातं द्रष्टव्यम्॥

विस्तरस्तु गुरुचरणकृतौ पुंसूक्तभाष्येऽनुसन्धेयः॥

## नारायणोपनिषदर्थनिर्णयः

ननु, नारायणोपनिषदि नारायणपरम्ब्रह्मेत्यादिना नारायणस्यैव परत्रप्रत्याम्नानेन तस्यैव वेदवेद्यतया नशिवस्यपरत्वं वा वेदवेद्यत्वंवा सिध्यतीतिचेन्न, सकलास्वपि निषत्सु शिवस्यैव परत्वश्रवणेन प्रकृते नाराय पदस्यापि शिवपरत्वावसायात्॥

## णत्वबाधाविधूननम्

नच नारायणपदस्य शिवपरत्वे यौगिकत्वेन संज्ञात्वविरहान्नू॥ पूर्वपदा त्संज्ञाया मगइति पाणिनीयविरोधेन णत्वं नसिध्यतीति

शक्यम् । नारायणपदस्य विष्णाविव शिवेऽपि संज्ञात्वात्, नराणा मयन त्वाच्च तेन नारायण शिव इति कूर्मोक्तेः ॥

ननु, तद्वचनं नारायणपदस्य शिवे योगवृत्तिप्रदर्शनपरमिति चे न्न, तथासति णत्वबाधापत्त्या नारायन इत्यापत्तेः ॥

किञ्च, नारायणि नमोऽस्तुत इति गौरीनाम्नि नारायणीशब्दः प्रयुज्यमानः, पुंयोगादाख्यायामिति ङीपन्ततया नारायणपदवाच्य पुंनिरू पितभार्यात्वलक्षणसम्बन्ध गौर्या बोधयन् शिवस्य नारायणसंज्ञकत्व मनु मापयति ॥

नच, पुंयोगादिति सूत्रे पुंयोगो दाम्पत्यरूपएवेति ननियमइति वाच्यम्, तस्यतद्रूपत्वस्यैव भाष्यस्वरससिद्धत्वात्, तथाहि, तस्यसूत्रस्य भाष्योक्ता न्युदाहरणानि प्रष्ठी प्रचरीत्यादीनि, कथं प्रष्ठादिशब्दस्य स्त्रीवृत्तित्व मित्याक्षिप्य-यथैव ह्यसा चकुर्वती किञ्चित्पापं तत्कृता न्वथ यन्थक्लेशा न्लभते, प्रष्ठशब्दोऽपि लभमइति समाधान मुक्तम्, जायाया एव पतिकृतपुण्यपापफलभोक्तृत्वं प्रसिद्धम्, अतएव, शब्देन्दुशेखरे पुंयोगसूत्रे, अत्र पुंयोगो दाम्पत्यरूपएवेति भाष्यस्वरसः । ययेयम् भर्तृकृता न्पापा न्लभतइति भाष्योक्ते रित्युक्तम् ॥ देवकीत्यादीनान्तु गौरादिपाठात् ङीनिति चोक्तम्, एवञ्च, कैकयीत्यत्र जन्यजनकभावलक्षण पुंयोगे ङीपिति कौमुदीकृदुक्ति रनादेया । भाष्यस्वरसविरुद्धत्वात् ॥

नच, नारायणशब्दस्य शिवे शक्तिबोधककोशाभावा त्तस्य तत्परत्वे संज्ञात्वाभाव इतिवाच्यम्, कोशाद्यभावेपि न्यायाविरुद्धपौरा

णिकनिर्वचनेन तस्य तच्छक्तत्वेन तत्संज्ञात्वात्। तस्मा न्नारायणपद
शिवपरत्व मबाधम् ॥

अपिच, ऋतगूं सत्यं परम्ब्रह्मेति. प्रकृतोपनिषद्गतमन्त्रे कृ
पिङ्गलवर्णार्धनारीश्वरस्य निगदितं परब्रह्मत्वं सङ्गच्छते। तदनुरो
नारायणपदं शिवपरत्वएव सुसङ्गतम्। अन्यथा—परस्परविरोधेनाऽ
निपदो व्याहतार्थत्व मापद्येत ॥

वस्तुतस्तु, अत्र नारायणपदस्य विष्णुपरत्वेपि तस्य व
स्योपासकस्तुतिरूपतया न विष्णोः परब्रह्मत्वसाधकम् ॥ तथाहि
दह्रं विपापं परवेश्मभूतं यत्पुण्डरीक म्पुरमध्यसंस्थम्। तत्रापि
गगनं विशोक स्तस्मि न्यदन्त स्तदुपासितव्यमिति वाक्ये, अनिर्दि
नामरूपं किञ्चिद्वस्तूपासितव्यमिति विधाय, ततः किंनामरूपं तद्व
त्याकांक्षायाम्, श्रु ॥ यो वेदादौ स्वरः प्रोक्तो वेदान्तेच प्रतिष्ठि
तस्य प्रकृतिलीनस्य यः पर स्समहेश्वर इत्युपसंहारवाक्येन, ऋ
सत्यं परम्ब्रह्म पुरुषं कृष्णपिङ्गलं, ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय
मोनम इत्युपक्रमवाक्येनच महेश्वर स्योपास्यवस्तुत्वेन प्रतिपादनात् म
मानुवाकस्य तत्परत्वमेवाऽवसीयते। वेदोपक्रमवाक्येन वेदोपक्रमे
समाप्तौ कर्तव्या उच्चैस्त्वादयो धर्मा उपक्रमानुरोधे नोपसंहारव
नीयन्ते, किम्पुन रुपक्रमोपसंहारावगतमहेश्वरोपासनानुरोधेन मध्य
वाको नेतव्य इति ॥

ननु, मध्यमानुवाके नारायणए वोपास्यतया प्रतीयत इ
न, उपासनाविधितत्फलयो रदर्शनात् ॥

तथाहि, ईश्वरोपासनेतु दहमित्यादिविधिवाक्यम्। नकर्मणा नप्रजया धनेन त्यागेनैके अमृतत्व मानशुः, वेदान्तविज्ञानसुनिश्चितार्था स्सन्यासयोगा यतय श्शुद्धसत्वाः, ते ब्रह्मलोकेतु परान्तकाले परामृता त्परिमुच्यन्ति सर्वइति फलवाक्य ञ्चोक्तम् ॥

नच, दहरमित्यादिवाक्यमेव नारायण स्योपास्यत्वविधायकं किं नस्यादिति वाच्यम्, तदुपक्रमोपसंहारो क्तोपासने महेश्वरावरुद्धत्वेसति नारायणादिदेवतान्तराणामनवकाशात्, तथाहि, द्वितीयाध्यायस्य द्वितीय पादे चिन्तितम्॥ गुण स्यापूर्वसंयोगे वाक्ययो स्समर्थत्वात्। चातु र्मास्येषु श्रूयते, तप्ते पयसि दध्यानयति सा वैश्वदे व्यामिक्षा, वाजिभ्यो वाजिनमितिच, अत्र दधिसम्बन्धात् क्षीरनीरयो र्विभेदेसति यो घनी भूतः क्षीरांशस्य सामिक्षा, तस्याश्च विश्वेदेवा देवता, तत्रयत्पृथग्भूतं नीरं तस्य वाजिनो देवता ॥ तत्रामिक्षा द्रव्यकं विश्वेदेवदेवताक मेकं कर्म ॥

अत्र, किं नुपरितनेन वाजिभ्यो वाजिन मित्यनेन पूर्वस्मि न्नेव कर्मणि वाजिनगुणो विधीयते। उत एतत्कर्मान्तरविधिरिति संशयः, तत्र वाजान्न मामिक्षा सा येषां विश्वेदेवाना मस्तीति वाजिनइति व्युत्पत्या प्रकृताने वाऽनूद्य वाजिनगुणो विधीयते' नचामिक्षयासह विक ल्प्यते, समुच्चीयतेवा इतिपूर्वपक्षः। उत्पत्तिशिष्टामिक्षागुणविरुद्धस्य कर्मणो गुणान्तराकांक्षाभावात् वाजिनस्य प्रवेशासम्भवेस त्यन्यथाऽनुप पन्नो वाजिनगुणो वाजिशब्दार्थस्य प्रकृतदेवताव्यतिरिक्तदेवतान्तरं कल्प यित्वा कर्मभेदे पर्यवस्यतीति राद्धान्तः, तत्र यथा-विश्वेदेवदेवताके यागे

उत्पत्तिशिष्टामिक्षागुणावरुद्धेसति नवाजिनगुणस्य प्रवेशः । एवं, द
रान्तरुपासने महेश्वरावरुद्धेसति नारायणादिदेवतान्तराणां नावकाशः ॥

ननु, नारायण स्योपास्यत्वाभावे मध्यमानुवाके तस्य सङ्कीर्तं
व्यर्थंसत् तस्यैवोपास्यत्वं बोधयतीतिचेत् उच्यते-उपासनाविधौ, उ
सन मुपास्य मुपासकश्चेति विधेयं त्रिविधम् । तत्र नासा वुपास
मक्रियारूपत्वात्, ना प्युपास्यश्चाऽयं तदुपासनाविधितत्फलयो रनु
म्भात् । किन्तु परिशेषा दस्योपासकत्वमेव सिध्यति ॥

नच, परिशेषस्याऽनुमानरूपत्वेन सम्भावनामात्रबोधकत्वाद
मर्थः श्रुतिमन्तरेण दुर्ज्ञेयइति वाच्यम् । श्रुत्यभावेऽपि श्रुतिसामर्थ्य
रूपलिङ्गस्य प्रमाणत्वात् ॥ तथाहि, श्रु ॥ पद्मकोशप्रतीकाशं हृदयं
प्यधोमुखम् । तस्यान्ते सुषिरंगूं सूक्ष्मं तस्मिं त्सर्वम्प्रतिष्ठितम् । तस्य
मध्ये महा नग्नि र्विश्वार्चि र्विश्वतोमुखः, तस्य मध्ये वह्निशिखा अणी
योर्ध्वा व्यवस्थिता, तस्याः शिखाया मध्ये परमात्मा व्यवस्थितइतिश्रु
परमात्मन शिव स्यान्त र्व्यवस्थितिबोधकवाक्येन श्रुतिमन्तरेणापि तस्य
मध्यरूपेण लिङ्गेन नारायण स्योपासकत्वं विहितमिति विज्ञायते ।
अत्र, यथैवपाठः प्रतिपत्तिहेतु स्तथैव सामर्थ्यमपि श्रुतीनामिति वार्ति
कस्य प्रमाणत्वात्, ईश्वरस्य नारायणहृदयवह्निशिखामध्यावस्थानं नार
यण स्योपासकत्वमन्तरेणाऽनुपपद्यमानमि त्यर्थापत्तिसहकारिण्या स्तस्य
शिखायामध्यइति श्रुते र्नारायण स्योपासकत्वविधायकत्वाच्च ॥

ननु, आत्मा नारायणः परइति वाक्ये परात्मशब्दस्य नाराय
परत्वेन शिखावाक्येपि परमात्मशब्दस्य तद्वाचकतया नारायण स्यैवा

कत्वासिध्या उपास्यत्वमेवाऽवगम्यत इतिचेत्--उच्यते, नारायणस्य हृदय वह्निशिखामध्यावस्थान मात्माश्रयदोषदुष्टम् । एकस्य युगपदुपास्योपासकत्वा भावात् । स्वय मात्मा वह्निशिखान्तराळे तिष्ठन् स्वेनात्मना उपास्यइति वचनस्य स्वपुरुषस्कन्ध मारुह्य नृत्यतीतिवत् हासावहत्वाच्च ॥

नच, योवेदादाविति वाक्येन, दहरं विपापमिति वाक्येनच परमेश्वर उपास्यइत्युक्ते-तत्र, अधिकार्यपेक्षायां वेदान्तविज्ञानेत्यादिनाऽधि कारिणां यतात्मनां दर्शितत्वेन, फलकांक्षायाञ्च परामृता त्परिमुच्यन्ति सर्वइत्यनेन चोपासनाफलत्वेन मुक्ते र्दर्शितत्वेनच यतात्मनो मुक्तिकामा ईश्वर मुपासीर न्नित्यर्थस्य परिनिष्ठितत्वेन नारायणहृदयसङ्कीर्तनस्य निष्फलत्वा न्नारायणस्य प्रस्ताव स्तस्योपास्यतामेव व्यनक्तीति चोद्यम्, पूर्वोत्तरवाक्यार्थविमर्शे नारायण स्योपासकतायाएव निश्चयमानत्वात् ॥

तथाहि, पद्मकोशप्रतीकाशं हृदयञ्चा प्यधोमुखम् । तस्यान्ते सुषिरगूं सूक्ष्मं तस्मि स्सर्वम्प्रतिष्ठितम् । तस्यमध्ये महानग्नि र्विश्वार्चि र्विश्वतोमुखः तस्यमध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थिता, तस्या शिखाया मध्ये परमात्मा व्यवस्थितइतीह चतुर्षुवाक्यांशेष्वस्य नाराय णस्य पद्मकोशाकारं यत् हृदयम् । तस्यान्ते यत्सुषिरम् । तस्यमध्ये या वह्निशिखा, तस्या शिखायामध्ये यत्परमात्मनोऽवस्थान ञ्चोक्तम् । अनन्त मव्यय ङ्कवि मित्यारभ्य परमात्मात्यवस्थित इत्यन्तम् । सर्वोपि, दहरं विपापमित्यादे स्तव्यप्रत्ययान्तस्य परमेश्वरोपासनाविधे र्नारायणःधि कारिप्रवर्तकोऽर्थवादः । तेन उपासक उपास्यस्वरूप स्स्वय म्भूत्वा उपासनां भावयेदिति गम्यते ॥

अत्र, अन्याय श्चानेकार्थत्वमितिन्यायेन हरिहरयो रन्यतर परमात्मशब्दार्थ इति प्राप्तम् । यद्यपि गौणस्यापि शास्त्रार्थत्वमि वपि मुख्यार्थविचारणायां नैत त्सम्भवति, तथाहि, यो वेदादावि दिना परमात्मा व्यवस्थितइत्यन्तेन उपक्रमोपसंहाराभ्या मनेकलिङ्ग कृताभ्यां परमात्मशब्दस्य हरएव मुख्यार्थइति प्रतीयते ॥

नच, योगस्या प्यत्र सम्भवितत्वेन कथं रूढिरिति वाच्यम रूढि र्योगमपहरतीति न्यायात् । ईश्वरस्यैव परमात्मशब्दवाच्यत्वम ईश्वरप्रकरणत्वात् । तदुपक्रमा त्तस्यैव मुख्यार्थत्वम् ॥ अश्वप्रतिग्रहेष्ट्य करणे, उपक्रमानुरोधेन उपसंहारस्य विपरिणामइत्युक्तम् । अत्रतु नके मुपक्रमानुरोधः, किन्तु, वेदोवा प्रायदर्शनादि त्युभयानुरोधस्याऽ सम्भवात्, नकेवल मुभयोरेवाऽनुरोधः । किन्तु मध्यपरामर्शस्यापि तौ निष्पन्नत्वात्, किञ्च, सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैरिति पा निस्मृतिपर्यालोचनयापि परमात्मशब्दस्याऽपरिमितैश्वर्यवाचित्वात्, कि मारचक्रपर्यपितया सर्वेषां देवानां रुद्रस्यैव मुख्यस्थानत्वेन दर्शनात् शिखायां रुद्रइति न्यासश्रुतौ तस्यै वोत्कृष्टतया दर्शनाच्च, शिव परमात्मशब्दस्य मुख्यार्थ इत्यवगम्यते ॥

ननु, अत्र नारायणए वोपास्योभवति हृदय त्वन्यपामे वोप कानां भविष्यतोतिचे दुच्यते, नारायणप्रकरणे निगदितं हृदयं ना णस्यै व भवितु मर्हति, पूर्वानुवाकेन दहरमित्यादिना विहित मुपास विषयं यदस्ति तत् सन्यासयोगा द्यतय श्शुद्धसत्त्वाइति यत्यात्मप्र दृष्टं हृदयं यतिसम्बन्धि, यथा—दर्शपूर्णमासप्रकरणे दृष्टा स्समिधो

तीति वाक्यविहिता याजाः दर्शपूर्णमासांगाः, तद्व न्नारायणप्रकरणोक्तं हृदयं नारायणसम्बन्ध्येवेति युक्तम् ॥

ननु, नारायण स्योपासकत्वे, नारायणपरम्ब्रह्मेत्यादिवाक्येन तस्य परब्रह्मत्वाद्युपास्यधर्माभिधानं न सङ्गच्छतइतिचे न्न, अस्य वाक्यस्य दीपो ज्योतिः परम्ब्रह्मेतिव दुपासकस्तुतिरूपत्वे नार्थवादत्वात्, नाराय णस्य ध्यातृध्येयविवेकरहितसमाध्यवस्थायां परब्रह्मणा शिवे नैक्या रोपात् गरुडभावनया गरुत्मन्त मात्मानं मन्यमानस्य मन्त्रिणइव पर ब्रह्मत्वादिधर्माणां सुसङ्गतत्वाच्च, अतएव, नारायणपरोध्यानेति तस्य परध्यातृत्वमेव परब्रह्मात्मकत्व कारणमिति तत्रोक्तम् नतुध्येयत्वमिति स्फुटम् ॥ अतएव,

श्लो ॥ ब्रह्मोच्यते परमसौ परमञ्च तत्वम्
ज्योतिः परञ्च परमेश्वर पद्मनाभः ।
त्वद्भावनैकरसिक स्त्वदनन्यभावा
न्मन्त्री यथा गरुडभावनया गरुत्मान् ॥

इति श्रुतिसूक्तिमालायां श्रीसुदर्शनाचार्यचरणै रुक्तम् ॥

ननु, सब्रह्म सशिव स्सहरिस्सेन्द्रइत्यादिवाक्योपास्यो देव श्शिवादन्यइति प्रतीयते, तस्यैव शिवत्वे सशिवइति वचनासम्भवा दितिचे न्न, तत्र हरिब्रह्मादिप्रायपाठानुरोधेन शिवपदस्य कालरुद्रवाचि त्वात्, तस्मा न्नारायणोपनिषदुदीरितदहरविद्योपास्य श्शिवएवे त्यनवद्यम् ॥

अपिच, इयंहि नारायणाख्योपनिषत्, उपक्रमे दहरविद्या तदनु, अन्तरादित्यविद्याम्, ततो गायत्रीविद्याञ्च प्रकाशयन्ती विद्या स्यैकलोपसंहारं स्पष्टीकरोति, अत्रत्यानां मन्त्राणां बहुषु श्रुत्यन्त ब्राह्मणेषु व्याख्यानात्, अनुवादात्, प्रत्यभिज्ञापनाच्च तदैकार्थ्य म इति विज्ञायते, यथा, प्रकृतनारायणीयमहोपनिषच्छृतपञ्चानुवाकात्म पञ्चब्रह्ममन्त्रब्राह्मणरूपेण प्रवृत्तायां पञ्चब्रह्मोपनिषदि ओपक्रमात् स जातादिमन्त्रव्याख्यानम्, श्रुत्यन्तरोपसंहारो दहरविद्योपसंहारश्च, ग त्रीविद्याच स्पष्टं पारमेश्च युपन्यस्ता ॥

तत्र प्रथमं विद्यानां प्रवर्तक ईशानइति भगवतः परमे स्येशानतां निरूप्य तत ईशानोभूतभव्यस्येति वचनेन बहुश्रुत्युपसं पूर्वकं शब्दादेवेति ब्रह्मसूत्रं स्वविषयमेवेति प्रकटीकरोति ॥

तथा, अंगुष्ठमात्रः पुरुषोंऽगुष्ठञ्च समाश्रितः, ईश सर्व जगतः प्रभुः प्रीणाति विश्वभुगिति प्रकृतश्रुत्यन्तगतो मन्त्रः पारमे स्पष्ट मुपसंहृतः, ततश्च सद्योजातादिमन्त्रत्रयप्रतिपादनानन्तरम्, त पायेति रौद्रगायत्रीव्याख्याने, सृष्टिस्थितिलयादीनां कारणं सर्व युक्, अवस्थात्रितयातीतं तुरीयं सत्यचित्सुखम्। ब्रह्मविष्ण्वादि भ्येत्थं सर्वेषां जनक म्परम्। ईशान म्परमं विद्यात् प्रेरक म्बुद्धिसा णम्। आकाशात्मक मव्यक्त मोङ्कारस्वरभूषितम्। सर्वदेवमयं स्पष्टमेव बुद्धिसाक्षीशानो गायत्र्यर्थः प्रकाशितः, तथा, ब्रह्मविष्णुसं तज्जनकत्वाभ्यां विशेषणेन स्फुटमेव नारायणानुवाकस्य उपासकमं मपञ्चकत्वम्। योदेवानामिति मन्त्रस्यच रुद्रस्य ब्रह्मजनकत्वे तास

विशदीकृतम् । ओङ्कारस्वरभूपितमिति सदाशिवोमिति श्रुतितः प्रणव वाच्यत्व म्प्रकटितम् । तत श्चेशानमन्त्रनिर्वचने, मायया मोहिता श्शम्भो र्महादेव ञ्जगद्गुरुम् । नजानन्ति सुरास्सर्वे सर्वकारणकारणम् । नसन्दृशे तिष्ठति रूप मस्य परात्परं पुरुषं विश्वधाम, इति । तथा, येन प्रका शते सर्वमिति पुनः । दृश्यते श्रूयते यच्च पञ्चब्रह्मात्मकं स्वयम्, इतिभूयः । ब्रह्मकार्यमिति श्रुत्वा ईशान म्प्रतिपद्यते, इति श्रूयते, तत्रच मायया मोहिता इत्यादिना, नत स्येशे कश्चन तस्यनाम महद्यशः महो देवो मर्त्यांगूं आविवेशेत्यादिः तथा, नसन्दृशइत्यादिना-परात्पर मित्य नेन—अतः पर न्नान्यदणीयसगूंहि परात्परं यन्महतो महान्त मितिवच नम् । पुरुषमिति, पुरुषस्य विद्म सहस्राक्षस्य–पुरुषं कृष्णपिङ्गलम् । पुरुषोवै रुद्रइत्यादिकम् विश्वधामइति, विश्वं नारायणः पर इत्यादिसिद्ध विश्वाभिधनारायणहृदयवर्तित्वम् । तथा, येन प्रकाशते सर्वमिति, येना वृतं खञ्च दिव म्महीञ्च येनादित्य स्तपति तेजसा भ्राजसाच इत्यादि मन्त्रजातम् । दृश्यते श्रूयते यच्च इत्यादिना, यच्च किञ्चि ज्जगत्सर्वं दृश्यते श्रूयतेपिवाइति, तथा, तदेवभूतं तदु भव्यमा इदम् । इष्टापूर्तं बहुधा जातंजायमानं विश्वं बिभर्ति भुवनस्य नाभिः । इति, तथा, विश्वं भूतं भुवनमित्यादयो मन्त्रा गृहीताः । सर्वस्यास्य मन्त्रजातस्य विश्वरूपाय वैनमोनमइति विश्वशब्दितहरिशरीरकपरमेश्वरोपास्त्यो तात्पर्य म्पर्यवसाययितुं, ईशान म्प्रतिपद्यतइति परमोपसंहारश्च व्यरचि ॥

ततश्च तस्मिन्नेव दहरविद्यादिमहितस्य छान्दोग्यस्या प्युपसं हाराय-एकेनैव तु पिण्डेन मृत्तिकायाश्च गौतम, इत्यादिना सर्वकार

णत्वलक्षण म्परमेश्वरे निरूप्य परमोपसंहारे, अस्मि न्ब्रह्मपुरे वेश्म यदि दहर म्मुने, पुण्डरीकन्तु तन्मध्ये आकाशो दहरोस्ति यत्, सहि स्सच्चिदानन्द स्सोन्वेष्टव्यो मुमुक्षुभिरिति दहरविद्या मुपसंहृत्य, अ हृदिस्थित स्साक्षी सर्वेषा मविशेषतः । इति बुद्धिसाक्ष्यपि सा न्यक्षएवेति निर्धारितः ॥

अतश्च प्रामाणिकाना मेकेनैवाऽनेन प्रमाणेन भविष्यति वि त्सराणां । परेषान्तु यद्यपि शतेनापि प्रमाणानां नभवत्येव दृढो विश्वास तथापि प्रामाणिकवैदिककुलसम्मोद मुद्दिश्य आवृत्ति रसकृदुपदेशादि न्यायेन दहरविद्यायाः पारमेश्वरत्वे प्रमाणानि कानिचिन् प्रदर्श्यन्ते ॥

## दहरोपास्यनिर्णयः

यथा-कठवल्लीषु—श्रु ॥ अंगुष्ठमात्रः पुरुषो मध्यआत्मनि तिष्ठ ईशानो भूतभव्यस्य, अंगुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृद सन्निविष्टः, तं विद्या च्छुक्र ममृतमिति, अंगुष्ठवाक्यशुक्रवाक्याभ्य म्प्रकृतोपनिष दुपसंहारोपक्रमयोः प्रत्यभिज्ञापनात्, सामानार्थ्यनिर्ण नियामिकाच तत्रेशानश्रुतिः, प्रश्नोपनिषदि, इहैवान्तश्शरीरे सो पुरुषः, मुण्डकेषु-य स्सर्वज्ञ स्सर्ववि द्यस्यैष महिमा भुवि, दिव्ये ब्र पुरे ह्येष व्योम न्नात्मा प्रतिष्ठितः, इत्यनयोश्च श्रुत्योः पारमेश्वरी श्रु सर्वज्ञइति पुरुषइतिच । तैत्तिरीये, यएषो न्तर्हृदय आकाश स्त स्मि न्नय म्पुरुषो मनोमयः । अमृतो हिरण्मयइति, अत्रामृतश्रुतिः, हि ण्मयत्वलिङ्गञ्च, छान्दोग्ये, गायत्रीप्रस्तावानन्तरम् अयम् वावसो मन्तःपुरुष आकाशइति गायत्रीपुंसूक्ताभ्यां वाच्यः दहरविद्यादि

उपसंहृतः । तयोश्च प्रकृतग्रन्थपूर्वप्रकरणाभ्यां सिद्धं शाम्भवत्वम् । बृहदारण्यकेच, यएपो न्तर्हृदय आकाश स्तस्मि च्छेते सर्वस्य वशी सर्वस्येशान स्सर्वस्याधिपति रित्यारभ्य-एप सर्वेश्वर एप भूताधिपति रेपभूतपालइत्यादिपरामृश्य, एप नित्योमहिमा ब्राह्मणस्य इत्यन्तं यजु रारण्यकत्वाविशेपात् सर्वो प्यलत्यार्थ स्सङ्गृहीतः । अत्र सर्वेश्वरश्रुतिः भूताधिपत्यादिकं लिङ्ग श्चानुसन्धेयम् ॥

तत्रैव परस्ताच्च, तद्य स्सत्य मसौ य आदित्यः । यएप एतस्मि न्मण्डले पुरुपइत्यारभ्य, मनोमयोऽय म्पुरुषो भा स्सत्य स्तस्मि न्नन्त र्हृदये यथा व्रीहिर्वा यवोवा एपसर्व स्येशान सर्वस्याधिपति स्सर्व मिद म्प्रशास्तीति-श्रुतं प्रकृतश्रुतिसमानार्थकं वेदितव्यम् ॥ अत्रेशान श्रुति स्सर्वाधिपतित्वसर्वशास्तृत्वे लिङ्गे कैवल्योपनिपदितु-हृत्पुण्डरीकं विरजमित्यारभ्य-नकर्मणेत्यादिप्रकृतोपनिपद्वचनानुवादपूर्वं स्पष्ट मुमा सहाय म्परमेश्वर म्प्रभुं त्रिलोचनं नीलकण्ठ म्प्रशान्त मित्यादिना दहर विद्योपसंहारः परशिवे प्रकृतश्रुतिसदृशं व्यरचि, श्वेताश्वतरेतु-एप देवो विश्वकर्मा महात्मा सदा जनानां हृदये सन्निविष्टः, हृदा मनीपा मन साऽभिक्लुप्तो यएत द्विदु रमृता स्ते भवन्तीति स्पष्टमेव प्रकृता श्रुति रनूदिता, तत्रैव समनन्तरं शिवएव केवलइति श्रूयते ॥

पुरस्तादपि, तदेवाग्नि रित्यादिप्रकृतश्रुति मन्त्र एवानूद्यते, अथ परस्ताच्च, अंगुष्ठमात्रः पुरुषोऽन्तरात्मा इत्यादि, अणो रणीया नित्यादि मन्त्रा स्सरूपा आम्नायन्ते, अन्तश्च सा शैवी सोपबृंहणा व्याख्याता ॥

तथा, अथर्वशिरसि-तदेद दुद्रचरित मित्यारभ्य, स उ गर्भे

अन्तः, तमात्मस्थमिति स्पष्ट मन्तर्हृदय मात्मा रुद्रः प्रकटीकृतः अथर्वशिखायान्तु, श्रु ॥ प्राण म्मनसि सहकरणै र्नादान्ते सम्प्रतिष्ठाप्य ध्यायी तेशान मित्यारभ्य-शम्भु राकाशमध्ये इत्यन्तं स्पष्टं दहरोपास्तिः पारमेश्वरी । नृसिंहतपने, ऋतगूं सत्य म्परम्ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं शङ्करं नीललोहितम् । उमापतिः पशुपतिः पिनाकी ह्यमितद्युतिः, ईशान स्सर्वविद्याना मित्यादिना योवै यजुर्वेदवाच्य इत्य न्तेन स्पष्टं याजुषी दहरविद्या विरूपाक्षपक्षएव समन्विता, तस्या श्चोपास्तेः फलं सोमृतत्व ङ्गच्छतीति मुक्ति रुक्ता ॥

एवं जुबालोपनिषदि, हृदि सर्वज्ञ उक्तः, रुद्रत्वाच तस्य पदस्य शिवपरत्वं दुरपह्नवम्, ध्यानबिन्दौ, हृत्पद्मकर्णिकामध्ये स्थिरदीपनिभाकृतिम् । अंगुष्ठमात्र मचलं ध्याये दोङ्कार मीश्वर मितीश्वरश्रुत्या दहरं हर स्समर्पितः, योगतत्वोपनिषदि—हृदिस्थाने स्थित म्पद्म मित्यारभ्य-शुद्धस्फटिकसङ्काशमिति श्रुतं वचन मसाधारणवर्णसमर्पणाच्च शम्भावे वाऽन्वेति । नारदपरिव्राजकोपनिषदि, अणो रणीयानिति प्रकृतोपनि षदुक्तरीत्या गुहाशय म्ब्रह्मानूद्य, अनादिमध्यान्तमनन्त मव्ययं शिवा च्युताम्भोरुहगर्भभूरुहम् । इति तस्य मूर्तित्रयकारणत्व मुक्त्वा, ततः, स्वरूपतेजोमयशाश्वतं शिवमित्युपसंहार श्शैवः प्रकाशितः, शरभोपनि षदिच, अणोरणीयानिति वचनानुवादात् स्पष्ट मुपसंहार श्शैवः, शाण्डि ल्योपनिषदिच, ओमित्येव यदुद्भूतं ज्ञानज्ञेयात्मकं शिवमित्यारभ्य-चिर कालं हृदेकान्तव्योमसंवेदना न्मुने, इति हृदिचिन्तनं तस्य चिद्व्योमत्व ञ्च न्यरूपि । योगशिखायां, मन स्सर्वत्र संगृह्य ओङ्कारं तत्र चिन्तयेत्,

ध्यायीत सततं प्राज्ञः हृत्कृत्वापरमेश्वर मिति श्रुतिस्फुटं परमेश्वरश्रुत्या वस्तु समर्पितम् । तत्रै वोत्तरत्र-आदित्यमण्डलाकारं रश्मिज्वालासमाकुलं, तस्य मध्यगतं वह्निं ज्वालये द्दीप्तवर्तिवत् । दीपशिखातुया मात्रा सामाला परमेश्वरे, इति, हृदि ध्येयगुणश्च वह्निशिखादिः प्रकृतोपनिषदीव दर्शितः, एकाक्षरोपनिषदितु, यएवं नित्यं वेदयते गुहाशयं प्रभु म्पुराणं सर्वभूतं हिरण्मयम् । इतिहिरण्मयलिङ्गकगुहाशयत्व मुक्तम् । त्रिपुरातपने, त्र्यम्बकविचार स्तत्फलश्चामृतत्व मुक्तम्, भस्म जाबालेतु, हिरण्यबाहुम, हिरण्यवर्णम्, हिरण्यरूपम्, पशुपाशविमोचकम्, सहस्राक्षम्, सहस्रशीर्षम्, सहस्रचरणम्, विश्वतोबाहुम्, विश्वात्मान मेकमद्वैतम्, निष्कलम्, निष्क्रियम्, शान्तम्, शिव मक्षर मव्ययम्, हिरण्यगर्भस्रष्टार मप्रमेय मनाद्यन्तमिति स्पष्ट मुपनिषदेव शाम्भवी कृता, दर्शनश्रुत्यन्तेतु, चिदम्बरन्तु हृन्मध्ये इतिस्थान स्थेययो र्निर्देशानन्तरम्, पुरुषम् सर्वशास्तारम् बोधानन्दमयम् शिवम्, धारयेदिति, तथा तद्रूपवर्णने—ऋतगूं सत्यं परम्ब्रह्म सर्वसंसारभेषजम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूप म्महेश्वरमिति प्रत्यभिज्ञानेन दहरविद्या शिवासाधारणीकृता, प्राणाग्निहोत्रोपनिषदिच, यदत्र मद्भि र्बहुधा विदग्धम् । रुद्रैः प्रजाव मथवा पिशाचैः, सर्व न्तदीशानो अभयङ्करोतु शिव मीशानायस्वाहा । अन्तश्चरति भूते ष्वितिच प्रकृतश्रुति रनूदिता, अपिच, नारायणोपनिषदि प्रथमेऽनुवाके—पुरुषस्य विद्म सहस्राक्षस्य महादेव स्येत्युपक्रम्य पुरुषमहादेवत्वद्व श्रुतिभि र्निरूप्यते प्रथमं विवक्षितं वस्तु, एतेषां शिवाभिधानत्वं स्पष्टं लोकवेदाभ्या मवगम्यते ॥ लिङ्ग

निच कानिचि द्विधन्त उपक्रमानुरोधीनि, यथा–प्रजापति श्चरतिग अन्तइति दहराकाशसमुपलभ्यमानत्वम् । तदेव भूतं तदुभव्यमा इदमिं भूतभव्यात्मकत्वम् । येनादित्य स्तपतीति सूर्यमण्डलमण्डनत्वम् । अ परं नान्यदणीयसगं हि परात्परं यन्महतो महान्तमि त्यणोरणीयस्त्व महतो महीयस्त्वम्, नतस्येशे कश्चन इतिसर्वेशितृत्वम्, तदेवर्तं मित दिना ऋत सत्य परब्रह्मशब्दित्वम्, इष्टापूर्तं बहुधाजातं जायम विश्वमिति जातजायमानविश्वात्मकत्वम्, हिरण्यगर्भइत्याद्यष्टर्चग्रह त्तद्गतहिरण्यगर्भस्रष्टृत्वम्, भूतपतित्वम्, द्विपच्चतुष्पदारण्यपशुपतित्व हिमवत्समुद्ररसादिस्वामित्वम्, बाहुद्वयव्याप्तदिक्त्वम्, सूर्याधिष्ठातृत्व ब्रह्मदण्डकत्वम्, देवप्राणरूपत्वम्, देवताधिपतित्वम्, प्रतद्योचे अ नुविद्वानिति विद्वदभिहितामृताभिख्यातृत्व मित्यादिकं बहु संगृहीतम्

अपिच, आद्यानुवाके-यत्र दहरविद्या तत्र महिमान मीशमिती श्रुतिः, महो देवो मर्त्यागं आविवेशेति महादेवश्रुतिः, विश्वाधिको रु महर्षिरिति रुद्रश्रुतिः, अन्ते महेश्वरइति महेश्वरश्रुतिरितीदं श्रुतिज दहरविद्यां शिवैकविषयां निर्धारयति ॥

तथा, लिङ्गानितु, धारयामा नमोभिरिति नमश्शेषित्वम् हिरण्यगर्भ म्पश्यत जायमानमिति हिरण्यगर्भस्रष्टृत्वम्, योवेदादावि प्रणववाच्यत्वञ्च लिङ्गानीमानि कार्त्स्न्येन रुद्रसाधारण श्रुतिभि श्शिवप समन्विता न्यनयैव श्रुत्या, तथाहि, पुरुषोवै रुद्रः, तत्पुरुषायविद्महे म दे.य धीमहीति पुरुषादिपदवाच्यत्वनिर्णयेन, विष्णुमुखा वै देवा श्छन्द भिरिमा न्लोकाननपजय्य मभ्यजयन्निति वेदद्वारकसंसिद्धज्ञानवत्तु ह

मुखतो निविष्टइति तस्यैवोपासक प्राथम्यदर्शना त्तदुपास्तिप्रथमविषयत्व मुत्तरत्र नारायणानुवाकेन दहरविद्योपसंहारे दहरोपास्यस्य महेश्वरस्य ख्यापनेन, तदेव भूत मिष्टापूर्त मित्यनयो र्विश्व म्भूत म्भुवनंचित्रं बहुधा जात ञ्जायमानञ्चयत् । सर्वोह्येष रुद्रइति रुद्रे समन्वयेन, येनादित्य इत्यस्य आदित्यमण्डलान्तर्वर्तिनि पशुपतिशब्देन, अतःपरं नान्यदित्यस्य अणोरणीया नित्यारभ्य, ईशमित्यन्त मीशशब्दिते समन्वयेन, नतस्ये शइत्यस्य, ईशान स्सर्वविद्यानाम्, ईश स्सर्वस्य जगतः इति श्रुतिभ्यां समन्वयेन, अनन्तरूपत्वस्य पतिं विश्व स्यात्मेश्वरगूं शाश्वतगूं शिवमच्युत मिति विश्वशब्दितनारायणपतौ समन्वयेन, हिरण्यगर्भजनकत्वस्य हिरण्य गर्भ म्पश्यत जायमानमिति रुद्रशब्दिते परमात्मनि समन्वयेन, बाहुभ्या मुतते नमइति बाहुद्वयप्राधान्यवर्णनेन, ब्रह्मदण्डकत्वस्य ब्रह्मणोऽधिपति रितिच देवप्राणरूपत्वस्य प्राणानां ग्रन्थिरसि-रुद्रो मा विशान्तकइतिच, स्पष्टं हरैकान्त्यप्रापणेन, देवाधिपतित्वस्य, यत्र देवाना मधि रेकोधिवासः आतेपित मरुतामित्यादौ दर्शनेन, अमृतत्वस्य, एतानिहवाअमृतस्यना मधेयानीत्यादौ दर्शनेन, नमस्त्रामित्वस्य, हविष्मन्तो नमसाविधेमतइति नमसां रुद्रोद्देशेन विधानेनच, सर्वेषामपि प्रकृतश्रुत्यन्तनिगदितानां लिङ्गानां शिवैकविषयत्वावगमेन दहरविद्या शिवैकविषयेति दुरपलपम् ॥

ननु, नारायणानुवाके नारायणस्य परब्रह्मत्वोक्त्या तस्यैव दहर विषयत्वं द्योत्यतइतिचेत्—उच्यते, द्वितीयानुवाके जातवेदसइत्यारभ्य दुर्गावर्णनपरया श्रुत्या, तवेन्द्रविष्णो रनुसञ्चरेमेति, वैष्णवीं लोक इह मादयन्तामितिच, पारमेश्वर्या दुर्गायाएव विष्णुतया निगदितत्वेन शिव

परिवारत्वावगमेन—दहरविद्यायां हरिप्रस्तावस्य, तत्परत्वस्यच तन्मूलक मवधार्यते । अतएव प्रथमानुवाकेपि गायत्रीषु शिवस्य सपरिवार पठ्यमानासु स्फुटम्, हरिगायत्रीदुर्गागायत्रीपाठौ दन्तिषण्मुखयो हिरण्यगर्भस्यापि गायत्र्याश्च पाठो दृश्यते । या उमा सामहावि र्यो विष्णु स्सहि चन्द्रमाः, इतिरुद्ररहस्यश्रुतेः युक्तमिह सपरिवार प्रस्तावे नित्यानपायिन्या देव्याः परा न्तनूं हरिं स्तोतुमिति दहरविद्या स्समनन्तरं हरि स्तूयते ॥

नच, दहरविद्यायाः परस्ता द्धरेः परब्रह्मत्व महाज्ञेयत्वादे श्र णात् सएव दहरविद्याविषयः किंनस्यादिति वाच्यम्, उपक्रमस्य प्र ल्यात्-श्रुतानुमितयोः श्रुते र्बलीयस्ताया न्यायसिद्धत्वाच्च, नापि तत्र वाके परत्वं नारायणे पठ्यते, नारायणपरोज्योतिरिति, नारायणपरम्ब्रह्मे नारायणपरोध्याता इति-नारायणात् परस्य ज्योतिस्त्वम्, नाराय परस्य ब्रह्मत्वम्, नारायणस्य परध्यातृत्वञ्च स्पष्ट मुक्तम् ॥

नच, नारायणपरम्ब्रह्मेति तत्पुरुषएव समानाधिकरणइति शंक्य तत्प्रतिबन्धकस्य लिङ्गस्य दर्शनात् । परवलिङ्गस्य तत्पुरुषसामान्यवि त्वेपि विशेषणस्यैव पूर्वनिपातनियमात् । नारायणपदस्य रूढत्वेन प्रति विशेषणत्वानुपपत्तेः, कथञ्चि द्विशेषणत्वोपपत्तावपि परम्पदवैयर्थ्य ब्रह्मणा प्यनिवार्यत्वात् । परशब्दोहि द्विविधः, अन्यपर्याय श्श्रेष्ठप यश्च, यदन्यपर्यायः प्रकृते नान्वेति, अथचेत् श्रेष्ठपर्यायः व्यावृत्यः, श्चिदपरो नारायणः प्रसिध्येत् । अथ नतावन्मात्रम्, चेन्नाराय विशेषणं नारायणस्य परत्व मतिप्रसक्तं व्यावृत्यं स्यात् । ब्रह्मप

द्विशिष्ट मन्वेति, अन्यत्र प्रसक्तत्रसत्वनिरासाय नारायणपदमात्रस्य सार्थक्ये पुनर्हन्त परपद मनर्थकमेव, अतश्च पदवैयर्थ्याभावाय यथा समासे भवति सार्थक्यं तथा सम्पादनीयम् , तच्च नसामानाधिकरण्ये सम्भवति परपदवैयर्थ्यतादवस्थ्या दतः पदवैयर्थ्यापेक्षया गौरवस्याऽदोप त्वस्य द्विरवयतिवाक्यवैयर्थ्यभिया वपापदस्य लक्षणां सहमानै स्तान्त्रिकै रङ्गीकारात् । व्यधिकरणएव तत्पुरुषो न्याय्यः ॥

तथा, विश्वशम्भुवमिति, विश्वं नारायणं देवं, विश्वं नारायणं हरिं, विश्वमेवेदं पुरुषइति प्रसिद्धविश्वाभिधानस्य-विश्वं विष्णु र्वषट्कार इत्यनूदितस्य उपबृंहणेषु हरेः सुखदायितृत्वप्रलिङ्ग ,मुक्तम् । ततश्च पतिं विश्वस्येतिपतित्वमनूद्य तस्यात्मत्वमीश्वरत्वं शिवत्व ञ्चोक्तम्। अन्ते श्रुत स्याच्युतपदस्यापि उपक्रमाविरोधाय तद्विशेषणत्वमेव न्याय्य मि त्यन वद्यम् ॥

## रुद्रजन्माभावनिर्णयः

ननु, तस्य ललाटा त्त्र्यक्ष श्शूलपाणि रुद्रतिष्ठतेत्यादिश्रुतेः रुद्रस्य ब्रह्मविष्णुजन्यत्वश्रवणान् नतस्य परब्रह्मत्व मितिचे न्न, हरेरपि ब्रह्मरुद्राभ्या जननस्य श्रुतत्वेन ब्रह्मजन्यत्वस्य त्वन्मतेपि तुल्यत्वात् , ब्रह्मविष्णुरुद्राणां विष्णो र्जननस्य का प्यनुक्तत्वा दुक्तत्वाच्च शिवादो शिवात् । रुद्रस्य रामकृष्णादेरिव दशरथवसुदेवाभ्या ङ्कथञ्चि दन्वेयम् ॥

अतएव, ब्रह्मणो नारायणस्यवा अविमुक्तोपासनास्थलत्वे नाति परिशुद्धा ल्ललाटदेशा दभिव्यक्ति श्शिवस्य, नतु नारायणस्येव ब्रह्मणो नासा पुटात्? तस्य पौत्रा त्काश्यपात्? मनुष्यमात्राद्वा जननम् ।

शिवस्य प्रादुर्भावे क्वचिदपि नारायणस्येव नपुरुषवीर्यप्रवेशः, नस्त्रीगर्भ वासः, नच तद्योनिप्रभवत्वञ्च क्वचित् ॥

किञ्च, शिवस्य ब्रह्मनारायणयो र्ललाटा दभिव्यक्ति स्स्वेच्छा धीनेति महाभारतकूर्मपुराणयो र्दर्शितम् ॥

तथाच, अनादिनिधनोदेव श्चैतन्यादिसमन्वितः, ज्ञानानिच व यस्य तारकादी न्यशेषतः, अणिमादिगुणोपेत मैश्वर्यं नचकृत्रिमम् । स पूर्वाधिको राजं स्तोषित स्तपसा विधेः । ललाटा दनियोज्योपि पुत्रत्वे प्रकल्पितइति ॥ अहञ्च भवतो वक्त्रा त्कल्पान्ते घोररूपधृत्, शूलपा र्भविष्यामि क्रोधज स्तवपुत्रक इति, एवम् निर्दिष्टः परमेशेन महे नीललोहितः, पुत्रो भूत्वाऽनुगृह्णाति ब्रह्माणं ब्रह्मणोनुजः । तस्य हृत्कम स्थस्य नियोगा दब्जजो विभुः, ललाटं तस्य निर्भिद्य प्रादुरासी न्महेश इत्यादिलैङ्गवचनमपि द्रष्टव्यम् । गर्भवासादिकन्तु शिवस्य क्वचिद नास्तीति स्कान्दपुराणसनत्कुमारसंहिताया मुक्तम्, सृष्ट्यर्थं न्ब्रह्मण पुत्रो ललाटा दुत्थितः प्रभुः, भूताना मधिपो रुद्रो मृड स्तन्तिचरो वृष स्वेच्छयापि नयस्याहु र्भूतसंसारसंग्रहः, पुरात्रेरपि यत्पत्न्याः करादेव भव त्सुतः, स्वल्पांशेनापि गर्भस्य दुर्वासत्व मुदाहरन्निति, रामकृष्णा तारयो रिन्द्रजित्साल्वादियुद्धेषु तदीयशरैः क्षति र्बन्धो मूर्छेत्यादि रामायणभारतादिप्रसिद्धम् । अवसाने देहत्यजनञ्च, गोप्रतारं त गच्छे त्सरय्वा स्तीर्थं मुत्तमं, यत्र रामो गत स्स्वर्गं सभृत्यबलवाहन देह न्त्यक्त्वा दिवं यात स्तस्य तीर्थस्य वैभवादिति महाभारतप्रसि मेव ॥ शिवस्य देहत्यागः क्वचिदपि च नश्रुतः, किरातरूपधारिण्या

तस्मि न्नर्जुनबाणै र्बाधा नाभूदित्युक्त म्भारते, ततोऽर्जुन श्शरै र्वर्षं न्किराते समवाकिरत्, तत्प्रसन्नेन मनसा प्रतिजग्राह शङ्करः, मुहूर्तं शरवर्षन्तु प्रतिगृह्य पिनाकधृत्, अक्षतेन शरीरेण तस्थौ गिरिरिवाऽपरः, स दृष्ट्वा बाणवर्षन्तु मोघीभूत न्धनञ्जयः, परमं विस्मय ञ्चक्रे साधु साध्विति चाब्रवी दिति ॥

अतएव—श्रीमदप्पयदीक्षितेन्द्रै र्ब्रह्मतर्कस्तवे—

श्लो॥ देवत्वमेव निटलाद्यदि धातृविष्ण्वो
राविर्भुवि थ तत स्तव कोनिकर्षः ।
नासापुटा न्नहिविधे र्नचतस्य पौत्रा
ज्जातोसि विष्णुरिव नापि मनुष्यमात्रात् ॥

श्लो॥ नास्त्येव ते पुरुषवीर्यकणानुषक्ति
र्नस्त्रैणगर्भजननं नच योनिजत्वम् ।
व्यक्त्या परं कचन ते शिव यद्यवद्य
मेतैः कियत्खलु विभो नभवे न्मुरारेः इत्यादिनोक्तम् ॥

ततएव—नमोविष्णवे बृहते करोमीत्यादिना बृहच्छब्दनिगदि तस्य विष्णोः, जातो बृहन्नभिपाति तृतीयमित्यादिना जन्म निगदितम् । शिवस्यतु-श्रु ॥ अजातइत्येवं कश्चि द्भीरुः प्रपद्यते । रुद्र यत्ते दक्षिण म्मुख न्तेन माम्पाहि नित्यमिति जन्मनिषिद्धं श्रुत्या भगवत्या, तस्मा च्छिव एकएव जन्ममृत्युरहितइ त्यनवद्यम् ॥

ननु, विष्णो र्गर्भवासादिक मैच्छिकमिति निगदितं पुराणे ष्वितिचे न्न, तस्य विमर्शासहत्वात् । तथाहि—श्रुतिसूक्तिमालायाम् ॥

श्लो ॥ इच्छावतीर्ण मुरशासन गर्भवास
स्स्याञ्चे दुदाहरण मेष विमर्शनीयः ।
गर्भे वसामि परिवेष्ट्य जरायुणाहं
मासा न्वहूनिति महेश्वर कस्य कामः ॥

श्लो ॥ इच्छापि नून मनुयाति पुराकृतानि
कर्माणि शङ्कर शुभाशुभलक्षणानि ।
, इच्छावतारवचनानितु भारतादौ
नारायणस्य गुणवाद मुदाहरन्ति ॥

इति श्रीहरदत्ताचार्यवर्यै निर्धारितम् ॥

अतएव-श्रीमद्रामायणोत्तरकाण्डे, एकपञ्चाशे सर्गे दशरथम्प्रति दुर्वाससउक्ति मनूद्य, शृणु राजन् पुरावृत्तं तथा देवासुरे युधि, दैत्याः सुरै र्भर्त्स्यमाना भृगुपत्नीं समाश्रिताः, तया दत्ताभया स्तत्र न्यवसन्नभया स्तदा । तदा परिगृहीतां स्ता न्दृष्ट्वा क्रुद्ध स्सुरेश्वरः, चक्रेण शितधारेण भृगुपत्न्या श्शिरोऽहरत् , तत स्तां निहतां दृष्ट्वा पत्नीं भृगुकुलोद्वहः । शशाप सहसा क्रुद्धो विष्णुं रिपुकुलार्दनम् , यस्मा दवध्यां मे पत्नी मवधीः काममूर्छितः, तस्मा त्व म्मानुषे लोके जनिष्यसि जनार्दन, तत्र पत्नीवियोगं त्वं प्राप्स्यसे बहुवार्षिकम् । शापापहतिभीतस्तु स्वात्मना भावितोऽभवत् , अर्चयामास तन्देवं भृगु श्शापेन पीडितः तपसा राधितो देवो ह्यब्रवी द्भक्तवत्सलः, लोकानां सम्प्रियार्थं तु शापं गृह्य मुक्तवान् , इति शप्तो महातेजा भृगुणा पूर्वजन्मनि, इ

गतोहि पुत्रत्व न्तत्र पार्थिवसत्तम, राम इत्यभिविख्यात स्त्रिषु लोकेषु मानद, तत्फलं प्राप्यनेचापि भृगुशापफल म्महदिति चोक्तं सङ्गच्छते ॥

एवञ्च–श्रु॥ विश्वाधिको रुद्रो महर्षिः, शिव एको ध्येय श्शिवङ्कर स्सर्वमन्य त्परित्यज्य, इत्यादिश्रुतिप्रामाण्यात्-सर्वासामपि श्रुतीनां शिवएव जगत्कारणम्, सएवोपास्यइत्यर्थे तात्पर्यं म्परिस्फुरति, एतेन, वेदप्रामाण्यवादिन श्शिवोपासनां नत्यजुरित्यत श्शैवमेव दर्शनं सर्ववेदसम्मतमिति सिद्धम् ॥

अतएव, सदाशिवः परम्ब्रह्म साम्बमूर्ति स्सनातनः, विभूतिरेव स्तस्यैव प्रपञ्चइति वैदिकाः। पाञ्चरात्रस्थितास्तस्य परभावे धृताक्षमाः, विष्णोः परत्वे वेदानामपि तात्पर्यमूचिरे, तन्निरासप्रकारोऽत्र संक्षेपेण प्रदर्श्यते। शिवतत्वविवेके यः प्रपञ्चो नोपपादितः॥ इति श्रीमद्वि रप्पयमखिवरै श्शिवकर्णामृते निगदितम्॥

## श्रीरामायण प्रतिपाद्यनिर्णयः।

अव॥ अथ श्रीमद्रामायणभारतादीनामपि शिवोपासनायामेव तात्पर्यमिति प्रतिपिपादयिषु राह ॥

श्लो॥ रामायणेन महतापिच भारतेन
रामादिसेविततया प्रथित म्महेशम्।
मुक्त्वा न्यदैवत मुपाश्रयता जनाना
मन्धाः कथ म्महितवेदपथानुग स्स्यात्॥

व्या॥ रामायणेनेति, ननु, सुन्दरकाण्डे-किं वैष्णवंवाक्यमिदम्-मेत्य,रक्षोविनाशाय परन्तुनेजः, अचिन्त्य मव्यक्त मनन्तरूपं, स्वमायया

साम्प्रत मागतंवा, इतिश्लोके, अचिन्त्यत्वस्वशीकृतमायत्वादीना म्ब्र
लक्षणानां वैष्णवे रूपे समभिवर्णना तत्र विष्णुपारम्यमेवाऽवेदित मिति
त्र, तत्र वैष्णवंवा, इति-आगतंवा इतिच वापदद्वयस्य विद्यमानत्वे
वैष्णवं परमं तेजः कपिरूप मेत्य रक्षोविनाशाय साम्प्रत मागतंवा
उत, अचिन्त्यमित्यादिगुणगुणितं अचिन्त्य मव्यक्त मनन्तरूपं, शि
म्प्रशान्त ममृत म्ब्रह्मयोनिम् । स्वमायया कल्पितविश्वधामेतिश्रुतिप्रसि
शिवशब्दितंवा ? रक्षोविनाशायेति योजनाया स्स्वरससिद्धत्वेन शिवः
परम्ब्रह्मेति विज्ञायमानत्वात् ॥

किञ्च, कृताभिषेक स्सरराज राम स्सीताद्वितीय स्सहल
णेन ॥ कृताभिषेको गिरिराजपुत्र्या रुद्र स्सविष्णु र्भगवानिवेश
रामायणगतश्लोके, रामपरिवारेलक्ष्मणस्थानस्य रुद्रपरिवारे विष्णोः
स्सविष्णुरि त्युपमानेन कविना निबद्धत्वेन लक्ष्मणापेक्षया रामचन्द्रस्
विष्ण्वपेक्षया रुद्रस्य पारम्य माविष्कृतम् ॥

नच, तत्र, रुद्र स्सनन्दीति पाठोङ्गीकृतइतिवाच्यम् , नन्
केशस्य रुद्रपुरोवर्तित्वप्रसिद्ध्या, रामपार्श्ववर्तिनो लक्ष्मणस्य स्थाने तन्
वेशनस्याऽनुचितत्वेनच, अनौचित्यदोषदूषितताद्दशापपाठस्य परप
कल्पितत्वावधारणेनाऽवाल्मीकीयत्वावगमात् ॥

किञ्च-युद्धकाण्डे, आदित्यहृदयं, ब्रह्माच्युतेश्वरेशाय रौद्राय व
नमइति रुद्रस्य मूर्तित्रयकारणत्वख्यापनेन — ताद्दशरुद्रशरीरभूतभास्
ध्यानेन श्रीरामचन्द्रस्य विजयप्रतिपादनेनच, रामचन्द्रस्य शिवोपासन
मावेदितम् ॥

अपिच, तदीयोत्तरकाण्डे अश्वमेधयागप्रस्तावे—

नान्य ंयक्ष्यामि भैषज्य मन्तरेण वृषध्वजम्

नाऽश्वमेधात्परो यज्ञः प्रियश्चैव महात्मनः ।

इति रामचन्द्रवचनेन—

तेतु रामवच श्श्रुत्वा नमस्कृत्वा वृषध्वजम् ।

अश्वमेधेन देवेश म्पूजयन्ति स्म नित्यशः ॥

इतिवचनेनच-श्रीरामेणाऽश्वमेधेन शिवएवाराधितइ त्यवगमेनच, श्रीरामचन्द्र श्शिवोपासकइति स्पष्टम् ॥

अतएव—अत्रपूर्वं म्महादेवः प्रसाद मकरो द्विभुरिति श्रीराम वचनेनैव श्रीरामस्य महादेवप्रसादभाजनत्व मवधार्यते ॥

ननु—अल्पपूरु ! अम्महादेव इतिव्याख्यात मितिचेत् , न एता दृशापव्याख्यानै रपपाठकल्पनैश्च, भगवदादिकविप्रणीतस्य श्रुतिसम्मि तस्य रामायणस्य व्याकुलीकरणेनापि स्वीयस्य पथोऽवैदिकमूर्धन्यत्वमेव सुप्रतिष्ठापितमि त्यवगम्यमानत्वात् । तस्मा द्रामायणप्रामाण्येनापि शिव एवोपास्य इत्यविवादमिति सिद्धम् ॥

## महाभारतप्रतिपाद्यनिर्णयः

ननु, भारतस्यादौ, नमोभगवते तस्मै व्यासायाऽमिततेजसे, यस्य प्रसादा द्वक्ष्यामि नारायणकथा मिमामिति सूतवचनेन पञ्चम वेदस्य महाभारतस्य हरिकथारूपत्वेन परिगणिततया न तस्य शिवपारम्य प्रतिपादकत्वमितिचे न्न, एवम्भूत म्भारत ङ्कुर्वाणो वेदव्यास श्श्रीकृष्ण माहात्म्यवर्णनद्वारा श्रीकृष्णेन, तत्पूर्वरूपपरवासुदेवात्मकमूलरूपेणच सदा

पूज्यमानं शिवमेव पुनःपुनः कथयन् श्रीकृष्णस्य शिवपूजानिष्ठत्वं तत्प्रसादलब्धसंकल्पभाववत्त्वञ्च वर्णितवान् ॥ तथाहि—

सौप्तिके, अश्वत्थामानम्प्रति शिववचनम् । सत्यशौचार्जवत्या स्तपसा नियमेनच, अहं यद्भवता राध्यः कृष्णेनाऽक्लिष्टकर्मणा, त स्मिन्प्रियतमः कृष्णा दन्यो मम नविद्यते इति॥ आदिपर्वणि—सुभद्रापरि प्रस्तावे, समुद्रमध्ये क्वचिद्द्वीपविशेषे कृष्णेन शिवस्य पूजार्थं म्प्रवर्ति महोत्सवःप्रपञ्चितः, उपमन्यूपदेशेन श्रीकृष्णस्यापि द्वादशाब्दावधि प पतव्रतानुष्ठानम्, कैलासयात्राया मन्यत्रच तत्रतत्र पूजास्तुतितर्पो श्श्रीकृष्णेन शिवप्रीणनमेव कृतमिति प्रपञ्चेन वर्णितम् । द्रोणपर्व द्रोणवधानन्तरम् क्रोधेन स्वप्रहितं कृष्णार्जुनयो र्वितथीभूत माग्नेय न्दृष्ट्वा व्रीडया धिक्इति शस्त्र म्परित्यज्य दक्षिणा न्दिश म्प्रस्थित स्थामानम्प्रति मार्गे समागतस्य श्रीवेदव्यासस्य तद्व्रीडापनयनार्थं वचन देवदेव स्त्वचिन्त्यात्मा अजय्यो विष्णुरव्ययः, सर्वरूप म्भवं ज्ञात्वालिं र्चयति यः प्रभुम् । तस्मि न्नभ्यधिका म्प्रीति ङ्करोतिहि वृषध्वजः, इ तत्रैव, कृष्णार्जुनौ पूर्वं नरनारायणा वृषी, ताभ्यां लिङ्गार्चनया प सहस्राणि शिवमाराधितवद्भ्यां शिवेन अतुलवीर्यबलपराक्रमादयो ब वरा दत्ताइति वेदव्यासेन कथिते, अहं किं नशिवपूजकइति नुयोग मश्वत्थामानम्प्रति तस्यैव वचनम् । जन्मकर्मतपोयोगा स्त्वच पुष्कलाः, ताभ्यां लिङ्गेऽर्चितो देव स्त्वयाऽर्चायां युगेयुगे, इ पारिजातजिहीर्षया शिवं सम्पूज्य स्तुवन् कृष्ण श्शिवेनैव स्मारि इतिसंस्तूयमानस्तु भगवा न्गोवृषध्वजः, प्रसार्य दक्षिणं बाहुं वा

मथाऽब्रवीत्, मनीषितानां मर्थानां म्प्राप्तिस्तेऽस्तु सुरोत्तम, पारिजातश्च हर्तासि माभू त्ते मनसो व्यथा, पुरा मैनाक माश्रित्य तप स्त्व मकरो र्यदा, तदा नमवचः कृष्ण संस्मृत्य स्थैर्य माप्नुहि, अवध्य स्त्व मजय्य स्त्व म्मत्त श्शूरतर स्तथा, भवितासी त्यवोचं यत्तथानत दन्यथा, इति ॥ एवं श्रीकृष्णस्य स्वरूपपूर्वगृहीतरूपैः कृते शिवाराधने अनेकानि वचना न्युदाहृतानि, तस्य मूलरूपेण कृतं शिवाराधनं ततो वरलाभश्चे त्युभय मारण्यपर्वणि तीर्थयात्राविधौ दर्शितम्। ततो गच्छे त्सुपर्णाक्षं त्रिषु लोकेषु दुर्लभम्। यत्र विष्णुः प्रसादार्थं शिव माराधय न्पुरा, वरांश्च सुबहू न्लेभे दैवैरपि सुदुर्लभान्। दत्तांश्च त्रिपुरघ्नेन परितुष्टेन भारत, अपिचान्यैः प्रियतमो लोके कृष्ण भविष्यसि, त्वन्मुखश्च जग त्सर्वं म्भविष्यति नसंशय इति, आनुशासनिकेच, यस्य ब्रह्मा च विष्णुश्च त्वञ्च शक्र सहामरैः, अर्चयध्वे सदालिङ्गं तस्मा च्छ्रेष्ठतमोहि कः, इत्युपमन्युवचनेन ब्रह्मविष्ण्वादीनां नित्यमेव शिवाराधकत्व मुक्तम्। एवं सौप्तिकादि ष्ववताररूपस्य श्रीकृष्णस्य शिवपूजनेन सकलवर लाभोक्त्या भारते साक्षात् प्रतिपादितनिरतिशयप्रभावशालिन स्साक्षा त्परब्रह्मेति सम्भाव्यमाना त्ततोपि तत्पूज्यस्य शिवस्य यत्पारम्यं व्यञ्जना वृत्त्या प्रतीयते तदेव श्रीमहाभारतस्य वाच्यनारायणचरितद्वारा व्यज्य मानं श्रीमहाभारतस्य प्रधान म्प्रतिपाद्यम्। द्रोणपर्वणि नारायणस्य मैनाके तपश्चर्योक्ता, ऊर्ध्वबाहु र्महातेजाः ज्वलनादित्यसन्निभः, षष्टि वर्षसहस्राणि तपस्तेपे शतानितु, व्यशोषय त्तदात्मानं वायुभक्षोऽम्बुजे क्षणः, अथाऽपरन्तप स्तप्त्वा द्विस्ततोऽन्य त्पुन र्महत्, द्यावापृथिव्यो

विवर न्तेजसा समपूरयत् , सतेन तपसा तत्र ब्रह्मभूतो यथाभवत्
इतितपश्चर्याकाले शिवंध्यायतो नारायणस्य शिवोहम्भावभावनाभाि
शिवभावएव ब्रह्मभूत इत्यने नोक्तः, ततोऽन्यस्य तेन प्राप्यस्य ब्र
भावस्याऽभावात् ; अतएव तपसा प्रसन्ने शिवे प्रत्यक्षेसति नाराय
बहुधा परब्रह्मधर्मै स्तवः कृतः, यथा—स जानुभ्या म्महीं कृत्वा कृ
शिरसिचाञ्जलिम् । पद्माक्ष स्तं विरूपाक्ष मभितुष्टाव भक्तिमान्
त्वद्भूतावै भूतकृतो वरेण्य गोप्तारो ये भुवनस्य गोपाः, प्रवि श्य
न्धरणीं ये ह्यरक्ष न्पुरा पुराणी तव देवसृष्टिः, भूत म्भव्य म्भ
यच्चा प्यदृष्टं त्वत्सम्भूता स्सत इमेहि लोकाः, भक्तञ्च मा म्भजम
म्भजस्व प्रीत्या मांवै लोकपित न्महेश ॥ इति ॥ एवञ्च, महाभारतेना
शिवएव परम्ब्रह्म सर्वोपास्यश्चेति सिध्यति ॥

## भगवद्गीताप्रतिपाद्यनिर्णयः

अतएव, ईश्वर स्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति, भ्रामयं स
भूतानि यन्त्रारूढानि मायया, तमेव शरणङ्गच्छ सर्वभावेन भारत,
लोकत्रय माविश्य विभ र्त्यव्यय ईश्वरः, तमेव शरणङ्गच्छ सर्वभा
भारत, यो लोकत्रय माविश्य विभ र्त्यव्यय ईश्वरः, तमेव चाद्य मपु
म्प्रपद्ये, उत्तमः पुरुष स्त्वन्यः परमात्मेति कीर्तितः, इत्याद
श्श्रीगीताचार्योक्तयश्च सङ्गच्छन्ते ॥

ननु ,अहं सर्वस्य प्रभवइत्यादिवचनपर्यालोचनया कृत्स्नाया
भगवद्गीताया नारायणपरत्वप्रतीत्या तन्मध्यगतं, यत्किञ्चिदीश्वर
पदघटितवाक्यमपि योगेना प्यविरोधाय नारायणपरमेव प्रकल्प्यतइति

त्त्व, लोकवेदाभ्या मनितरसाधारणत्वा दीश्वरादिशब्दानाम्, तादृश शब्दस्वारस्या द्गीतानिगदितानाम प्यहंसर्वस्य प्रभवइत्यादिवाक्यानाम्, अहम्मनुरभवं सूर्यश्चेति वामदेवसार्वात्म्योपदेशवत्, शास्त्रदृष्ट्या तूप देशो वामदेववदितिन्यायेन स्वान्तर्यामि परमात्माभिप्रायेण परशिवपर त्वावगमात्। नच, सर्वस्य चाहं हृदि सन्निविष्टइत्यादिपञ्चदशाध्याय वचनजातेन, ईश्वर स्सर्वभूताना मित्यादिप्रत्यभिज्ञानेन ईश्वरादिपद घटितानामपि विष्णुपरत्वमेवाऽवसीयतइति वाच्यम्, तमेव शरणङ्गच्छ, तमेव चाद्य म्पुरुष म्प्रपद्यइत्यादिवचनपर्यालोचनया भगवत श्श्रीकृष्णस्य उपासककोटा वन्तर्गणनेन परमात्मत्वाभावात्, अतएवाऽहंसर्वस्य प्रभव इत्यादिरीत्या प्रतिपादिते निखिलजगज्जन्मादिकारणत्वे, ईश्वरस्यखलु जन्मादिकारणत्वं तव कथ मुपपद्यतइतीश्वरविषयशङ्कानिरासार्थ मीश्वर स्सर्वभूताना मित्याद्युक्तिः, एवञ्च, यत ईश्वर स्सर्वभूतानां हृदि वर्तते अतोऽह मन्तर्यामिभावेन जगत्कारणत्वं वच्मीति हृदयं तत्र ज्ञेयम्॥

नच, ईश्वरशब्दस्य परशिवपरत्वेऽस्मच्छब्दस्याऽन्तर्यामिपरत्वम्। अस्मच्छब्दस्याऽन्तर्यामिपरत्वे ईश्वरशब्दस्य शिवपरत्वमि त्यन्योन्या श्रयइति वाच्यम्, कूर्मपुराणोक्तरीत्याऽस्मच्छब्दस्याऽन्तर्यामिपरत्वस्याऽ न्यतएव सिद्धत्वात्॥

तथाच, कूर्मे, ईश्वरगीतायाम्, शिवस्य सकल म्महिमानं शिवेनैव सनत्कुमारादिभ्य उपदिष्टं वर्णयित्वा वेदव्यासेनैव कथितम्॥

सनत्कुमारो भगवां स्संवर्ताय महामुनिः, दत्त्वा नैश्वरं ज्ञानं सोपि सत्यव्रतायतु, सत्यव्रतोऽपि योगीन्द्रः पुलस्त्याय महर्षये, प्रददौ

गौतमायाऽथ पुलस्त्यश्च प्रजापतिः, अङ्गिरा वेदविदुपे भरद्वाज
दत्तवान्, जैगीषव्याय कपिल स्तथा पञ्चशिखायच। पराशर
सनका त्पितामे सर्वतत्त्ववित्, लेभे तत्परमं ज्ञानं तस्मा द्वाल्मी
राप्तवान्, मामुवाच पुरादेवः सतीदेहभवाङ्गजः, वामदेवो महाय
रुद्रः किलपिनाकधृत्, नारायणोपि भगवान् देवकीतनयो हरिः,
नाय स्वयंसाक्षा द्दत्तवानिद मुत्तमम्। यदाहं लब्धवा न्रुद्रा द्वाम
दनुत्तमम्। विशेषा द्गिरिशे भक्ति स्तस्मा दारभ्य मेऽभव, दित्ये
वेदव्यासेन कथितमिति, ज्ञान न्तदैश्वर न्दिव्यं यथाव द्विदितं त्व
स्वयमेव हृषीकेशः प्रत्युवाच सनातनम्। गच्छगच्छ स्वकं स्थानं न
कर्तुं मर्हसि, भजस्व परया भक्त्या शरण्यं शरणं शिवमिति, ए
भगवद्गीताया ईश्वरगीतानुवादरूपत्वा त्तदर्थएव पर्यवसानं युक्त
किञ्च-भारतस्य शिवपारम्यप्रतिपादनपरतया तदनुरोधेनापि तद
ताया गीताया श्शिवपरत्व मुचितम्॥

नच, मन्मनाभव मद्भक्तो मद्याजी मां नमस्कुरु, मामेवै
सत्य न्ते प्रतिजाने प्रियोसि मे, इति परमोपसंहारस्य कृष्णविष
मितिवाच्यम्॥

तत्र मामित्यस्य मामुपास्ते तीन्द्रवाक्यव दन्तर्यामीश्वरपरत्वा
अतएव, तत्प्रसादा त्परां शान्ति स्थानं प्राप्स्यसि शा
मित्यायुक्ति स्सङ्गच्छते, तमेव शरणङ्गच्छेतिच सार्थक म्भवति,
भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्। सुहृदं सर्वभूतानां ज्ञात्वा

शान्ति मृच्छति, मद्याजी मां नमस्कुर्वित्यादीनाम प्यन्तर्यामिभावेन परमेश्वरपरत्वमेव न्याय्यम् ॥

अन्यथा, अर्जुनस्य शिवाराधनपरत्वेन भारतप्रसिद्धतया तत्सर्वं विरुध्येत, अवर म्भवतो जन्म परं जन्म विवस्वतः, इति प्रश्नोत्तरावसरे, बहूनि मे व्यतीतानि जन्मानि तवचार्जुन, तान्यहं वेद सर्वाणि नत्वं वेत्थ परन्तपेति स्वस्याऽनेकजन्मवत्वं कृष्णेनै वोक्तं नसङ्गच्छेत, नजा यते म्रियतेवा विपश्चि न्नायं कुतश्चि न्नबभूव कश्चित्, अजो नित्य श्शाश्वतोऽय म्पुराणो नहन्यते हन्यमाने शरीरइत्यादिवचनविरोधापत्तेः, तस्मा द्भगवद्गीता शिवपरै वेति सिद्धम् ॥

अतएव, विश्वरूपप्रदर्शनकाले, दर्शयामास पार्थाय परमं रूप मैश्वर मित्याद्युक्ति स्सङ्गच्छते, अन्यथा, द्रष्टु मिच्छामि ते रूप मैश्वर म्पुरुषोत्तमेतिप्रश्नवाक्यविरोधापत्तेः ॥

नच, ब्रह्माण मीशं कमलासनस्थ मृषींश्च दिव्या नुरगांश्च सर्वानित्यत्र, ईशशब्दवाच्यस्य शिवस्य विश्वरूपमध्यगतत्वोक्त्या तस्य तत्स्वरूपत्वासम्भवइतिवाच्यम्, ईशशब्दस्य ब्रह्माणमित्येतत्प्रति विशेष णत्वात् ॥

अतएव, ऋष्युरगसमुच्चायकौ द्वौ चकारौ चरितार्थौ, अन्यथा, एकेनैव चकारेण सर्वसमुच्चये लब्धे द्वितीयचकारवैयर्थ्यापत्तेः ॥

किञ्च, कमलासनस्थमित्यस्य ब्रह्मविशेषणत्वावश्यकतया तत्र त्येशशब्दस्यापि तद्विशेषणत्वावश्यम्भावेन तस्य शिववाचकत्वे तन्मध्य गतत्वेन दूरान्वयापत्तेश्च ॥

अपिच, भगवान् श्रीकृष्णोहि योगप्रभावेण पारमेश्वरमेव रू
पार्थाय प्रादर्शयदि त्यवगम्यते, अतएव, गीतासु, दिव्यं ददामि
चक्षुः पश्य मे योग मैश्वरमिति ईश्वरतादात्म्यबोधकयोगप्रदर्शनं कृष्णो
मुपन्यस्य, एवमुक्त्वा ततो राजन् महायोगीश्वरो हरिः, दर्शयाम
पार्थाय परमंरूप मैश्वरमिति असाधारणेश्वरशब्दितपरशिवरूपमेव यो
कृष्णः प्रदर्शयामासेति स्पष्टमेवोक्तम्। अन्तेच-ईश्वर स्सर्वभूतानां हृ
शेऽर्जुन तिष्ठतीत्यादिना तमेव शरणं गच्छ सर्वभावेन भारते इ
संहृतम् ॥

एवञ्च, मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु, इत्याद्युि
श्रीकृष्णस्य स्वान्तर्यामिपरमशिवाभिप्रायैव नतु स्वाभिप्राया ॥

अतएव, छान्दोग्ये तृतीयप्रपाठके सप्तदशखण्डे तद्धैतद्
आङ्गिरसः कृष्णाय देवकीपुत्रा यो क्त्वोवाच, अपिपासएव स ब
इतिवाक्येन श्रीकृष्णस्य आङ्गिरसशिष्यत्व माम्नातं सङ्गच्छते ॥

अतएवच, मयैवैते निहताः पूर्वमेव, निमित्तमात्रं भव सव्यसा
न्निति वचनोक्तास्मच्छब्दस्य—

द्रोणपर्वणि-शतरुद्रीये, वेदव्यासम्प्र त्यर्जुनेन,

श्लो॥ संग्रामे न्यहनं शत्रून् शरौघै विमलै रहम्
अग्रतो लक्षये न्तं पुरुषं पावकप्रभम्।
ज्वलन्तं शूल मुद्यम्य यां दिशं प्रतिपद्यते
तस्यां दिशि विशीर्यन्ते शत्रवो मे महामुने।
तेन भग्ना नरी न्सर्वा न्मद्भग्ना न्मन्यते जनः

भगवं स्तं ममाचक्ष्व कोवै स पुरुषोत्तमः ।
शूलपाणि र्मया दृष्ट स्तेजसा सूर्यसन्निभः
न पद्भ्यां स्पृशते भूमिं नच शूलं विमुञ्चति ।
शूला च्छूलसहस्राणि निपेतु स्तस्य तेजसा ॥

इति पुन स्सात्यवतेयेन—ईशानं वरदं पार्थ दृष्टवानसि शङ्करम् । तं गच्छ शरणं देवं वरदं भुवनेश्वर मित्यादिवचनैः भगवान् शिवएव प्रतिपाद्य इत्यवधार्यते ॥

ननु—अजोपि स न्नव्ययात्मा भूताना मीश्वरोपि सन् ।
प्रकृतिं स्वा मवष्टभ्य सम्भवा म्यात्ममायया ॥

इत्यादिना वासुदेवस्य ब्रह्मलक्षणं स्मृतमिति चेन्न, श्रीकृष्ण मूलभूतस्यादिविष्णो रुमांशत्वस्य पुरस्ता न्निरूपितत्वेन तस्य तन्मूलत्वा त्तावता गीताया ईश्वराद्यसाधारणाभिधानश्रुत्यादिसिद्ध शिवपरत्वाक्षतेः ॥

नच, अश्वमेधपर्वणि, द्रष्टु मिच्छामि ते रूपं वैष्णवं तन्निदर्शये त्युदङ्केन पृष्ट स्तत स्तस्मै प्रसन्नात्मा दर्शयामास तद्वपुः शाश्वतं वैष्णवं धीमा न्ददृशे यद्धनञ्जयइति पार्थदृष्टरूपस्य वैष्णवत्वे नानुवादात् तदविरोधाय पार्थेन पूर्वं दृष्टस्यापि वैष्णवत्वं प्रकल्प्यतइति वाच्यम्, अनुपसञ्जातविरोधिन्यायेन उपक्रमस्य प्राबल्या त्तदविरोधा यास्यैव वैष्णवशब्दस्य ऐश्वरत्वप्रकल्पनस्य न्याय्यत्वात्, ईश्वरोपासनासमधिगतत्वेन ऐश्वरमिति, विष्णुना साधितत्वेन वैष्णवमिति च उभयपद सार्थक्यात् ॥

अपिच, तमेव शरणं गच्छेत्युक्त्वा, त्वं कं प्रपद्यसइति श निवारणार्थं तमेव चाद्य म्पुरुष म्प्रपद्य इत्युक्त्वा, प्रपदनीयपुरुषः कई शङ्कानिवारणार्थम्, उत्तमः पुरुष स्त्वन्यः परमात्मे त्युदाहृतः, लोकत्रय माविश्य बिभ र्त्यव्यय ईश्वर इत्यनेन, नाय म्परिदृश्यम शरीरी परमात्मा वक्तु रन्यइत्युक्त्वा, तल्लक्षणप्रदर्शनार्थैव, यो लोक मन्तर्यामिभावेन प्रविश्य बिभर्ति स ईश्वरशब्दवाच्यः परमा त्मेतिनिरू तत्वात् ॥

नच, तमेव चाद्य म्पुरुष म्प्रपद्य इत्यत्र इतिशब्द मध्याहृ श्रीशङ्कराचार्यैः, प्रपद्य इयतइति छेदेन रामानुजीयैः प्रपद्ये—प्रपद्येत मध्वाचार्यैश्च व्याख्याततत्वेन प्रकृतश्लोकेन न परमेश्वरस्य श्रीकृष्णप्र नीयत्व मवगम्यतइति वाच्यम् ॥

इतिशब्दस्य पदार्थविपर्यासकारितया, यतः प्रवृत्ति रित प्रपद्य इयतइति छेदस्य यत्तदो नित्यसम्बन्धित्वन्यायबाधिततया, प्रप इति विवरणस्य पुरुषवचनविपरीततयाच, तादृशविवरणानां स्वपक्ष गीताविरुद्धत्वसाधकत्व मन्तरा स्वाभिमतार्थबोधकत्वाभावात्। तस्मा मन्मना भव मद्भक्तः, अहं सर्वस्य प्रभवइत्यादिना श्रूयमाणोऽस्मच्छब्द न्तर्यामिपर इत्यविवादम् ॥

अतएव, स्थितोऽस्मि गतसन्देहः करिष्ये वचन न्तवेत्याद्युक्त्वा यावज्जीव मीश्वरमेव पूजयामास न कदाचिद प्ययूपुज न्माधव मर्जुनः

नच, करिष्ये वचन न्तवेत्याद्युक्तिः युद्धमात्रविषयेतिवाच्यम् मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु, इति, सर्वधर्मा न्परित्य

मामेकं शरणं व्रज, इत्यादिवचनानि श्रुतवता प्यर्जुनेन देवतान्तर म्परित्यज्य परमेश्वरस्यै वाराधितत्वात् ॥

ननु, सर्वत्र प्रयुक्त स्यास्मच्छब्दस्य प्रयोक्तृपरत्वे शक्ति रन्त र्यामिपरत्वेन ईश्वरे लक्षणाचेति लक्षणाङ्गीकारस्य गौरवग्रस्तत्वा न्नारायण परएव भवितु मर्हतीतिचे दुच्यते, परै रकामै रप्यत्रत्यास्मच्छब्द स्यान्त र्यामिपरत्व मवश्य मङ्गीकार्यमेव, अन्यथा, महाभारतएव भगवत श्श्रीकृ ष्णस्य महाविष्णोः केशांशत्वेन वर्णनात्, परै र्महाविष्णोरेव सर्वान्त र्यामित्वाङ्गीकारात्, सर्वस्य चाऽहं हृदि सन्निविष्टइत्यादिना तत्केशां शस्य सर्वान्तर्यामित्ववर्णनानुपपत्तेश्च ॥

किञ्च, देवकीगर्भसम्भूतत्वात् श्रीकृष्णस्य जातस्यहि ध्रुवोमृत्यु र्ध्रुवं जन्ममृतस्यचेत्यस्य, अच्छेद्योऽय मदाह्योय नक्लेद्योशोष्यएवच, नित्य स्सर्वगत स्थाणु रित्यस्यच परस्परविरोधापत्तेः ॥

अपिच, परिदृश्यमानशरीरविशिष्टस्य सर्वान्तर्यामित्ववर्णनानु पपत्तेः ॥

अन्यच्च, परमात्मविभूतिवर्णनावसरे वृष्णीनां वासुदेवोस्मी त्युक्तत्वेन परिदृश्यमानस्यैव परमात्मत्वाङ्गीकारे स्वस्यैव स्वविभूतित्व वर्णनानुपपत्तेः ॥

अपरञ्च, मन्मनाभव मद्भक्तो मद्याजी मां नमस्कुरु, मामेवैष्यसि सत्यन्ते प्रतिजाने प्रियोसिमे इत्यादिषु स्थित स्यास्मच्छब्दस्य परिदृश्य मानशरीरिपरत्वाङ्गीकारे पराङ्गति मन्तरेण पैशाचीं नप्रवेष्टु मीष्टे कृष्ण

तनु मर्जुनः, इत्यादिविरोधशतपरिहाराय अस्मच्छब्दस्यान्तर्यामिपर भवता प्यवशतो ङ्गीकार्यमेव ॥

यद्यन्तर्यामिपरत्व मङ्गीकृत्यापि नारायणस्यैव सर्वान्तर्यामि मुच्यतइतिचे त्तत्प्रतिज्ञामात्रलभ्यम्। यथाऽविरोधस्तथास्तु, अस्ति नारायणपरत्वे विरोधः। तथाच, ईश्वरादिशब्दाना मपरित्यज्य यं रूढिं लक्षणया नारायणपरत्वाङ्गीकारः प्रथमः, अथर्वशिखादिश्रुति सिद्धपरमेश्वरपरत्वानादरो द्वितीयः, कूर्मपुराणस्याऽप्रामाण्याभ्युप स्तृतीयः, प्रकृतभारतसिद्धपरमेश्वरपरत्वानादर श्चतुर्थः, गीताश्रोतृ व्यवहारानुसारः पञ्चमइत्यादिदोषदुष्टत्वा न्नतमां विष्णुपरीभ मर्हति गीता ॥

अपिच, भारते, तच्छेषे हरिवंशेच, श्रीकृष्णेन शिव आरा इति बहुवार माख्यातत्वेन, श्रीकृष्णेन स्वपुत्रस्य साम्बइति पारमे नामकरणेनच भगवतो वासुदेवस्यापि परमेश्वरभक्तत्वावधारणेनच, ि एव प्रपत्तव्यइति रामायणभारतादिभिरपि स्पष्ट मवगम्यते ॥

एवं श्रीकृष्णादिभिरपि परमेश्वरभक्तै स्स्वपुत्राणां साम्बेत्यादि पारमेश्वरनामकरणं विधायानुकूल म्परमेश्वरनाम संस्मृतमिति विजान अपि ये पारमेश्वरं नाम स्मर्तुं नोरीकुर्वते तेषा म्पन्था बहिर्भूतो वेद दिति विदितमेव ॥

एतेन, यत् अध्यात्मरामायणानन्दरामायणादिषु शिवस्य श्री भक्तत्व म्प्रपञ्चित न्तत्तेषां ग्रन्थानामेव धूर्तजनकल्पितत्व मनुमाप प्रत्यक्षवेदरामायणमहाभारतादिविरोधादि त्यल मधिकेन ॥

नन्वेवं शिवस्यैव विश्वाधिकत्वे विश्वसेव्यत्वेच वैष्णवेषु पुराणेषु निगद्यमानस्य विष्णो स्सर्वाधिकत्वस्य सर्वसेव्यत्वस्यच का गति रिति चेत्, उच्यते, विष्णो शिवोपासकत्वस्य श्रुतिस्मृतिमहाभारतादिप्रसिद्ध तया तस्य परंब्रह्मत्वादि व्यवहारः परमेश्वर निरंतरभावनासिद्धइति विज्ञायते। अतएव, ब्रह्मोच्यते पर मसौ परमं च तत्त्व मित्यादिना श्रीसुदर्शनाचार्यचरणै रुक्तं संगच्छते, अन्यथा, श्रु॥ विष्णो देवत्वं परमस्यवित्से, श्रु॥ प्रतद्विष्णु स्तपते वीर्याय, नारायणपरो ध्याता, पदं यद्विष्णो रुपमंनिधायि, इत्यादि, सूतसंहितायां, एकएवमहाविष्णु शिवज्ञानमहोदधिरिति, आनुशासनिके, व्याख्यातुं देवदेवस्य शक्तो नामा न्यशेषतः, ऋते नारायणात्पुत्र शंखचक्रगदाधरात्, इत्यादिना श्रुति स्मृतिषु महाविष्णोः शिवोपासकत्वं शिवज्ञाननिधित्वं। शिवप्रसाद लब्धमहिमातिशयवत्त्वं च निगद्यमानं नोपपद्येत॥

किञ्च, श्रु॥ भूतस्य जातः पति रेक आसीदिति चतुर्मुखस्य, श्रु॥ जातो बृहन्नभिपाति तृतीयमिति, नमो विष्णवे बृहते करोमीत्यादौ बृहत्पदवाच्यतया श्रुतस्य चतुर्भुजस्यच जन्मनः प्रसिद्धतया, श्रु॥ अजात इत्येवं कश्चि द्भीरुः प्रपद्यते, रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्य मिति रुद्रस्य जन्माभाव स्याम्नाततया च 'नहि भिक्षुः भिक्षुकान्तरं याचितु मर्हति सत्यन्यस्मिन्न भिक्षुक इतिन्यायेन जन्ममृत्युराहित्यर्थिनां जन्ममृत्युराहितस्य श्रीरुद्रस्यैव प्रपदनीय त्वावधारणाच्च॥

नच, बृहत्पदस्य ब्रह्मवाचकतया तेन विष्णो र्ब्रह्मत्वं सिध्यतीति शंक्यम्, तेन विशिष्टजीवत्व स्यैवावगमेन ब्रह्मत्वासिद्धेः, अतएव,

एको विष्णुर्महद्भूतं पृथग्भूता न्यनेकश इति तस्य जीवविशिष्टत्व
माम्नातं संगच्छते, ब्रह्मत्वन्तु भूतपतित्वप्रयुक्तं, भूतपतित्वंच श्रु ॥ ईशान
स्सर्वविद्याना मीश्वर स्सर्वभूतानां ब्रह्माधिपति र्ब्रह्मणोधिपति र्ब्रह्मे
महेश्वरासाधारणत्वेन श्रवणात् भूतपदवाच्यस्य जीवस्य सू ॥ ज्ञेयत्व
वचनाच्चेति उपास्यत्वनिराकरणाच्च भूतपते रीशानस्यैव प्रपत्तव्यत्व
मवधार्यते ॥

ननु, शिवस्य विश्वाधिकत्वाभ्युपगमे हरिहरसाम्यव्यवहार
विरुध्येतेतिचेन्न, इष्टापत्तेः, तथाच, श्रु ॥ परात्परतरो ब्रह्मा तत्परा त्प
तरो हरिः, तत्परात्परतो ह्यीश इति, श्रु ॥ विश्वाधिको रुद्रो महर्षि
रितिच महेश्वरे ब्रह्मनारायणाभ्या मधिकत्वस्य विश्वाधिकत्वस्यच च
श्रुतिसिद्धतया तद्विरुद्धस्य साम्यव्यवहार स्यानुपादेयत्वात्। किंच
सूतसंहितायाम्, त्वयोतो यदिचंडभानुसहशल्तुत्योहरि श्शंभुनाइति
केचि दद्वैत माश्रित्य विडालप्रतिमा नराः, रुद्रेण साम्य मन्येषां प्र
दन्ति विमोहिता इत्यादिना साम्यवादस्य बहुधा निराकृतत्वाच्च
अपिच, शिवपुराणे, ये मां विष्ण्वादिभि स्तुल्यं ये त्वां लक्ष्म्यादि
शक्तिभिः, गुरुं ये प्रकृतेस्तुल्यं संस्मरन्त्यल्पबुद्धयः, तेषां पापानि
नश्यन्ति शिवरात्रीप्रजागरा दिति हरिहरसाम्यस्मरणस्य प्रायश्चि
विधानाच्च ॥

ननु, हरिहराभेदवार्तायाः का गति रितिचे न्न, नारायणस्य
पार्वत्यंशत्वस्य कचित् श्रुतत्वेन तस्या स्तन्निबन्धनतया सर्वश्रुतिस्मृती
हासादिसिद्धस्य परमेश्वरसर्वोपास्यत्वस्याऽहानेः ॥

गतोहि पुत्रत्व न्तव पार्थिवसत्तन, राम इत्यभिविख्यात स्त्रिपु लोकेषु मानद, तत्फलं प्राप्यनेचापि भृगुशापफल म्महदिति चोक्तं सङ्गच्छते ॥

एवञ्च–श्रु॥ विश्वाधिको रुद्रो महर्षिः, शिव एको ध्येय श्शिवङ्कर स्सर्वमन्य त्परित्यज्य, इत्यादिश्रुतिप्रामाण्यात्-सर्वासामपि श्रुतीनां शिवएव जगत्कारणम् , सएवोपास्यइत्यर्थे तात्पर्य म्परिस्फुरति, एतेन, वेदप्रामाण्यवादिन श्शिवोपासनां नजह्युरित्यत श्शैवमेव दर्शनं सर्ववेदसम्मतमिति सिद्धम् ॥

अतएव, सदाशिवः परम्ब्रह्म साम्बमूर्ति स्सनातनः, विभूतिलेश स्तस्यैव प्रपञ्चइति वैदिकाः । पाञ्चरात्रस्थितास्तत्य परभावे धृताक्षमाः, विष्णोः परत्वे वेदान्तानपि तात्पर्यमूचिरे, तन्निरासप्रकारोऽत्र संक्षेपेण प्रदर्श्यते । शिवतत्वविवेके यः प्रपञ्चे नोपपादितः ॥ इति श्रीमद्गिरण्ययमखिवरै श्शिवकर्णामृते निगदितम् ॥

## श्रीरामायण प्रतिपाद्यनिर्णयः ।

अव॥ अथ श्रीमद्रामायणभारतादीनामपि शिवोपासनायामेव तात्पर्यमिति प्रतिपिपादयिषु राह ॥

श्लो॥ रामायणेन महतापिच भारतेन
रामादिसेविततया प्रथित म्महेशम् ।
मुक्त्वा न्यदैवत मुपाश्रयता जनाना
म्पन्थाः कथ म्महितवेदपथानुग स्स्यात् ॥

व्या॥ रामायणेनेति, ननु, सुन्दरकाण्डे-किं वैष्णवंवाकपिरूप मेत्य,रक्षोविनाशाय परन्तुतेजः, अचिन्त्य मव्यक्त मनन्तरूपं, स्वमायया

साम्प्रत मागतंवा, इतिश्लोके, अचिन्त्यत्ववशीकृतमायत्वादीना म्
लक्षणानां वैष्णवे रूपे समभिवर्णना तत्र विष्णुपारम्यमेवाऽवेदित मिति
न्न, तत्र वैष्णवंवा, इति-आगतंवा इतिच वापदद्वयस्य वियमानत्वे
वैष्णवं परमं तेजः कपिरूप मेत्य रक्षोविनाशाय साम्प्रत मागतं
उत, अचिन्त्यमित्यादिगुणगुणितं अचिन्त्य मव्यक्त मनन्तरूपं, शि
म्प्रशान्त ममृत म्ब्रह्मयोनिम् । स्वमायया कल्पितविश्वधामेतिश्रुतिप्र
शिवशब्दितंवा ! रक्षोविनाशायेति योजनाया स्स्वरससिद्धत्वेन शिव
परम्ब्रह्मेति विज्ञायमानत्वात् ॥

किञ्च, कृताभिषेक स्तरराज राम स्सीताद्वितीय स्सहल
णेन ॥ कृताभिषेको गिरिराजपुत्र्या रुद्र स्सविष्णु र्भगवानिवेश
रामायणगतश्लोके, रामपरिवारलक्ष्मणस्थानस्य रुद्रपरिवारे विष्णो
स्सविष्णुरि त्युपमानेन कविना निबद्धत्वेन लक्ष्मणापेक्षया रामचन्द्र
विष्ण्वपेक्षया रुद्रस्य पारम्य माविष्कृतम् ॥

नच, तत्र, रुद्र स्सनन्दीति पाठोङ्गीकृतइतिवाच्यम्,
केशस्य रुद्रपुरोवर्तित्वप्रसिद्ध्या, रामपार्श्ववर्तिनो लक्ष्मणस्य स्थाने
वेशनस्याऽनुचितत्वेनच, अनौचित्यदोषदूषिततादृशापपाठस्य प
कल्पितत्वावधारणेनाऽवाल्मीकीयत्वावगमात् ॥

किञ्च-युद्धकाण्डे, आदित्यहृदये, ब्रह्माच्युतेशेशाय रौद्राय
नमइति रुद्रस्य मूर्तित्रयकारणत्वख्यापनेन -- तादृशरुद्रशरीरभूतभा
ध्यानेन श्रीरामचन्द्रस्य विजयप्रतिपादनेनच, रामचन्द्रस्य शिवोपा
मावेदितम् ॥

अपिच, तदीयोत्तरकाण्डे अश्वमेधयागप्रस्तावे–

नान्य मद्दयामि भैषज्य मन्तरेण वृषध्वजम्

नाऽश्वमेधात्परो यज्ञः प्रियश्चैव महात्मनः ।

इति रामचन्द्रवचनेन—

तेतु रामवच श्श्रुत्वा नमस्कृत्वा वृषध्वजम् ।

अश्वमेधेन देवेश म्पूजयन्ति स्म नित्यशः ॥

इतिवचनेनच-श्रीरामेणाऽश्वमेधेन शिवएवाराधितइ त्यवगमेनच, श्रीरामचन्द्र श्शिवोपासकइति स्पष्टम् ॥

अतएव–अत्रपूर्व म्महादेवः प्रसाद नकरो द्विभुरिति श्रीराम वचनेनैव श्रीरामस्य महादेवप्रसादभाजनत्व मवधार्यते ॥

ननु–अत्रपूरु ! अम्महादेव इतिव्याख्यात मितिचेत् , न एता दृशापव्याख्यानै रपपाठकल्पनैश्च, भगवदादिकविप्रणीतस्य श्रुतिसम्मि तस्य रामायणस्य व्याकुलीकरणेनापि स्वीयस्य पथोऽवैदिकमूर्धन्यत्वमेव सुप्रतिष्ठापितमि त्यवगम्यमानत्वात् । तस्मा द्रामायणप्रामाण्येनापि शिव एवोपास्य इत्यविवादमिति सिद्धम् ॥

## महाभारतप्रतिपाद्यनिर्णयः

ननु, भारतस्यादौ, नमोभगवते तस्मै व्यासायाऽमिततेजसे, यस्य प्रसादा द्वक्ष्यामि नारायणकथा मिमामिति सूतवचनेन पञ्चम वेदस्य महाभारतस्य हरिकथारूपत्वेन परिगणिततया न तस्य शिवपारम्य प्रतिपादकत्वमितिचे न्न, एवम्भूत म्भारत ङ्कुर्वाणो वेदव्यास श्श्रीकृष्ण माहात्म्यवर्णनद्वारा श्रीकृष्णेन, तत्पूर्वरूपपरवासुदेवात्मकमूलरूपेणच सदा

पूज्यमानं शिवमेव पुनःपुनः कथयन् श्रीकृष्णस्य शिवपूजानिष्ठ तत्प्रसादलब्धसकलप्रभाववत्त्वञ्च वर्णितवान् ॥ तथाहि—

सौप्तिके, अश्वत्थामानम्प्रति शिववचनम् । सत्यशौचार्जवत्व स्तपसा नियमेनच, अहं यद्भवता राध्यः कृष्णेनाऽक्लिष्टकर्मणा, त स्प्रियतमः कृष्णा दन्यो मम नविद्यते इति॥ आदिपर्वणि—सुभद्रापरि प्रस्तावे, समुद्रमध्ये कचिद्द्वीपविशेषे कृष्णेन शिवस्य पूजार्थं म्प्रवर्ति महोत्सवःप्रपञ्चितः, उपमन्यूपदेशेन श्रीकृष्णस्यापि द्वादशाब्दावधि प पतव्रतानुष्ठानम्, कैलासयात्राया मन्यत्रच तत्रतत्र पूजास्तुतिपों श्रीकृष्णेन शिवप्रीणननेव कृतमिति प्रपञ्चेन वर्णितम् । द्रोणपर्व द्रोणवधानन्तरम् क्रोधेन स्वप्रहितं कृष्णार्जुनयो वितथीभूत माग्नेय न्दृष्ट्वा व्रीडया धिक्इति शस्त्र म्परित्यज्य दक्षिणा न्दिश म्प्रस्थित स्थामानम्प्रति मार्गे समागतस्य श्रीवेदव्यासस्य तद्व्रीडापनयनार्थं वचन देवदेव स्त्वचिन्त्यात्मा अजय्यो विष्णुरव्ययः, सर्वरूप म्भवं ज्ञात्वालि चयति यः प्रभुम् । तस्मि न्नभ्यधिका म्प्रीति ङ्करोतिहि वृषध्वजः, इ तत्रैव, कृष्णार्जुनौ पूर्वं नरनारायणा वृषी, ताभ्यां लिङ्गेर्चनया पष्टि सहस्राणि शिवमाराधितवद्भ्यां शिवेन अतुलवीर्यबलपराक्रमादयो ब वरा दत्ताइति वेदव्यासेन कथिते, अहं किं नशिवपूजकइति नुयोग मश्वत्थामानम्प्रति तस्यैव वचनम् । जन्मकर्मतपोयोगा स्त स्तवच पुष्कलाः, ताभ्यां लिङ्गेऽर्चितो देव स्त्वयाऽर्चायां युगेयुगे, इ पारिजातजिहीर्षया शिवं सम्पूज्य स्तुवन् कृष्ण श्शिवेनैव स्मारि इतिसंस्तूयमानस्तु भगवा न्गोवृषध्वजः, प्रसार्य दक्षिणं बाहुं वासु

मथाऽब्रवीत्, मनीषिताना मर्थाना म्प्राप्तिस्तेऽस्तु सुरोत्तम, पारिजातश्च हर्तासि माभू त्ते मनसो व्यथा, पुरा मैनाक माश्रित्य तप स्त्व मकरो र्यदा, तदा नमवचः कृष्ण संस्मृत्य स्थैर्य माप्नुहि, अवध्य स्त्व मजय्य स्त्व म्मत श्शूरतर स्तथा, भवितासी त्वयोचं यत्तथानत दन्यथा, इति ॥ एवं श्रीकृष्णस्य स्वरूपपूर्वगृहीतरूपैः कृते शिवाराधने अनेकानि वचना न्युदाहृतानि, तस्य मूलरूपेण कृतं शिवाराधनं ततो वरलाभश्चो त्युभय मारण्यपर्वणि तीर्थयात्राविधौ दर्शितम्। ततो गच्छे त्सुपर्णाक्षं त्रिपु लोकेषु दुर्लभम्। यत्र विष्णुः प्रसादार्थं शिव माराधय न्पुरा, वरांश्च सुबहू न्लेभे देवैरपि सुदुर्लभान्। दत्तांश्च त्रिपुरघ्नेन परितुष्टेन भारत, अपिचान्यैः प्रियतमो लोके कृष्ण भरिष्यसि, त्वन्मुखञ्च जग त्सर्वं म्भविष्यति नसंशय इति, आनुशासनिकेच, यस्य ब्रह्मा च विष्णुश्च त्वञ्च शक्र सहामरैः, अर्चयध्वे सदालिङ्गं तस्मा च्छ्रेष्ठतमोहि कः, इत्युपमन्युवचनेन ब्रह्मविष्ण्वादीनां नित्यमेव शिवाराधकत्व मुक्तम्। एवं सौप्तिकादि ष्ववताररूपस्य श्रीकृष्णस्य शिवपूजनेन सकलवर लाभोक्त्या भारते साक्षात् प्रतिपादितनिरतिशयप्रभावशालिन स्साक्षा त्परब्रह्मेति सम्भाव्यमाना त्ततोपि तत्पूज्यस्य शिवस्य यत्पारम्यं व्यञ्जना वृत्त्या प्रतीयते तदेव श्रीमहाभारतस्य वाच्यनारायणचरितद्वारा व्यज्य मानं श्रीमहाभारतस्य प्रधान म्प्रतिपाद्यम्। द्रोणपर्वणि नारायणस्य मैनाके तपश्चर्योक्ता, ऊर्ध्वबाहु र्महातेजाः ज्वलनादित्यसन्निभः, षष्टि वर्षसहस्राणि तपस्येव शतानितु, व्यशोषय त्तदात्मानं वायुभक्षोऽम्बुजे क्षणः, अथाऽपरन्तप स्तप्त्वा द्विस्ततोऽन्य त्पुन र्महत्, द्यावापृथिव्यो

विंवर न्तेजसा समपूरयत् , सतेन तपसा तत्र ब्रह्मभूतो यथाभवत्
इतितपश्चर्याकाले शिवंध्यायतो नारायणस्य शिवोहम्भावभावनाभावि
श्शिवभावएव ब्रह्मभूत इत्यने नोक्तः, ततोऽन्यस्य तेन प्राप्यस्य ब्र
भावस्याऽभावात् , अतएव तपसा प्रसन्ने शिवे प्रत्यक्षेसति नाराय
बहुधा परब्रह्मधर्मैं स्तवः कृतः, यथा—स जानुभ्या म्मही ङ्गत्वा कृत
शिरसिचाञ्जलिम् । पश्चाक्ष स्तं विरूपाक्ष मभितुष्टाव भक्तिमान्
त्वद्भूतावै भूतकृतो वरेण्य गोप्तारो ये भुवनस्य गोपाः, प्रवि श्य
न्धरणीं ये ह्यरक्ष न्पुरा पुराणी तव देवसृष्टिः, भूत म्भव्य म्भावि
यच्चा प्यदृष्टं त्वत्सम्भूता स्सत इमेहि लोकाः, भक्तञ्च मा म्भजमा
म्भजस्व प्रीत्या मांवै लोकपित न्महेश ॥ इति ॥ एवञ्च, महाभारतेनापि
शिवएव परम्ब्रह्म सर्वोपास्यश्चेति सिध्यति ॥

## भगवद्गीताप्रतिपाद्यनिर्णयः

अतएव, ईश्वर स्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति, भ्रामयं स्सर्वं
भूतानि यन्त्रारूढानि मायया, तमेव शरणङ्गच्छ सर्वभावेन भारत, यो
लोकत्रय माविश्य बिभ र्त्यव्यय ईश्वरः, तमेव शरणङ्गच्छ सर्वभावेन
भारत, यो लोकत्रय माविश्य बिभ र्त्यव्यय ईश्वरः, तमेव चाद्य म्पुरुष
म्प्रपद्ये, उत्तमः पुरुष स्त्वन्यः परमात्मेति कीर्तितः, इत्यादि
श्श्रीगीताचार्योक्तयश्च सङ्गच्छन्ते ॥

ननु ,अहं सर्वस्य प्रभवइत्यादिवचनपर्यालोचनया कृत्स्नायाअपि
भगवद्गीताया नारायणपरत्वप्रतीत्या तन्मध्यगतं, यत्किञ्चिदीश्वरादि
पदघटितवाक्यमपि योगेना प्यविरोधाय नारायणपरमेव प्रकल्प्यतइति

त्र, लोकवेदाभ्या मनितरसाधारणत्वा दीश्वरादिशब्दानाम्, तादृश शब्दस्वारस्या द्गीतानिगदितानान् प्यहंसर्वस्य प्रभवइत्यादिवाक्यानाम्, अहम्मनुरभवं सूर्यश्चेति वामदेवसार्वात्म्योपदेशवत्, शास्त्रदृष्ट्या तूप देशो वामदेववदितिन्यायेन स्वान्तर्यामि परमात्माभिप्रायेण परशिवपर त्वावगमात्। नच, सर्वस्य चाहं हृदि सन्निविष्टइत्यादिपञ्चदशाध्याय वचनजातेन, ईश्वर स्सर्वभूताना मित्यादिप्रत्यभिज्ञानेन ईश्वरादिपद घटितानामपि विष्णुरत्वमेवाऽवसीयतइति वाच्यम्, तमेव शरणंगच्छ, तमेव चाद्य म्पुरुष म्प्रपद्यइत्यादिवचनपर्यालोचनया भगवत श्श्रीकृष्णस्य उपासककोटा वन्तर्गणनेन परमात्मत्वाभावात्, अतएवाऽहंसर्वस्य प्रभव इत्यादिरीत्या प्रतिपादिते निखिलजगज्जन्मादिकारणत्वे, ईश्वरस्यवस्तु जन्मादिकारणत्वं तव कथ मुपपद्यतइतीश्वरविषयशङ्कानिरासार्थ मीश्वर स्सर्वभूताना मित्यादुक्तिः, एवञ्च, यत ईश्वर स्सर्वभूतानां हृदि वर्तते अतोऽह मन्तर्यामिभावेन जगत्कारणत्वं वच्मीति हृदयं तत्र ज्ञेयम्॥

नच, ईश्वरशब्दस्य परशिवपरत्वेऽस्मच्छब्दस्याऽन्तर्यामिपरत्वम्। अस्मच्छब्दस्याऽन्तर्यामिपरत्वे ईश्वरशब्दस्य शिवपरत्वमि त्यन्योन्या श्रयइति वाच्यम्, कूर्मपुराणोक्तरीत्याऽस्मच्छब्दस्याऽन्तर्यामिपरत्वस्याऽ न्यतएव सिद्धत्वात्॥

तथाच, कूर्मे, ईश्वरगीतायाम्, शिवस्य सकल म्महिमानं शिवेनैव सनत्कुमारादिभ्य उपदिष्टं वर्णयित्वा वेदव्यासेनैव कथितम्॥

सनत्कुमारो भगवां स्संवर्ताय महामुनिः, दत्तवा नैश्वरं ज्ञानं सोपि सत्यव्रतायतु, सत्यव्रतोऽपि योगीन्द्रः पुलस्त्याय महर्षये, प्रददौ

गौतमायाऽथ पुलस्त्यश्च प्रजापतिः, अङ्गिरा वेदविदुपे भरद्वाजा
दत्तवान्, जैगीषव्याय कपिल स्तथा पञ्चशिखायच। पराशरो
सनका त्पितामे सर्वतत्त्ववित्, लेभे तत्परमं ज्ञानं तस्मा द्वाल्मी
रातवान्, मामुवाच पुरादेवः सतीदेहभवाङ्गजः, वामदेवो महायो
रुद्रः किलपिनाकधृत्, नारायणोपि भगवान् देवकीतनयो हरिः, अ
नाय स्वयंसाक्षा द्दत्तवानिद मुत्तमम्। यदाहं लब्धवा न्द्रा द्वामदे
दनुत्तमम्। विशेषा द्गिरिशे भक्ति स्तस्मा दारभ्य मेऽभव, दित्येवं
वेदव्यासेन कथितमिति, ज्ञान न्तदैश्वर न्दिव्यं यथाव द्विदितं त्वया
स्वयमेव हृषीकेशः प्रत्युवाच सनातनम्। गच्छगच्छ स्वकं स्थानं न
कर्तुं मर्हसि, भजस्व परया भक्त्या शरण्यं शरणं शिवमिति, एवञ्च
भगवद्गीताया ईश्वरगीतानुवादरूपत्वा त्तदर्थएव पर्यवसानं युक्तम्
किञ्च-भारतस्य शिवपारम्यप्रतिपादनपरतया तदनुरोधेनापि तदन्त
ताया गीताया श्शिवपरत्व मुचितम् ॥

नच, मन्मनाभव मद्भक्तो मद्याजी मां नमस्कुरु, मामेवैष्य
सत्य न्ते प्रतिजाने प्रियोसि मे, इति परमोपसंहारस्य कृष्णविषय
मितिवाच्यम् ॥

तत्र मामित्यस्य मानुषास्ये तीन्द्रवाक्यव दन्तर्यामीश्वरपरत्वात्।

अतएव, तत्प्रसादा त्परां शान्ति स्थानं प्राप्स्यसि शाश्व
मित्याद्युक्ति स्सङ्गच्छते, तमेव शरणङ्गच्छेतिच सार्थक म्भवति, ए
भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम्। सुहृदं सर्वभूतानां ज्ञात्वा

नन्वेवं, पांचरात्रेषु, कथ्यमानस्य नारायणसर्वोपास्यत्वस्य का गति रितिचेत्, उच्यते, श्रुतिभ्रष्ट श्श्रुतिप्रोक्तप्रायश्चित्तेभयंगताः, क्रमेण श्रुतिसिद्ध्यर्थं मनुष्यस्तंत्र माश्रयेदिति स्मरणेन वैदिकपथानधिकृतजन विषयत्वेन निर्बाधादिति सर्व मनवद्यम् ॥

अत्र ॥ अथ सर्वमतस्थैरपि पारमेश्वरपारम्य मनुमोद्यतएवेति तेन शिवाद्वैतस्यैव वेदपथत्व मभिव्यञ्जय न्प्रकरण मुपसंहरति ॥

मू ॥ केचि त्सती म्पशुपतेः कतिचि त्तदंश
मञ्जाक्ष मात्मभव मीशितुरेव चान्ये ।
वादैः परं बहुविधैः परिसाधयन्त
श्शम्भु म्परात्परतर म्प्रतिपादयन्ति ॥

केचिदिति ॥ यद्यपि केचि दम्बिका मन्ये विष्णुं परे गणपति मपरे षण्मुखञ्च भजमाना स्तत्तत्परत्वसाधकवादग्रन्था न्विबध्नन्ति । तथापि, तत्र, अम्बिकायाः परमेश्वरसतीत्वेन, विष्णो रम्बिकांशरूपत्वे न, गणपतिषण्मुखयोस्तु परमेश्वरात्मजत्वेनच तत्तत्परत्वप्रतिपादक वादैः परमेश्वरस्य परात्परत्वमेवाऽवशतस्साधितं भवतीति ततोपि शिवा द्वैतस्यैव वेदपथत्वं सुप्रतिष्ठित म्भवतीतिशिवम् ॥

लिङ्गाम्बाह्वदयेशेन नागलिङ्गेन निर्मिते ।
सव्यभागे वेदपथे भव्ये ब्रह्मपथंगते ।
वैष्णवाङ्मयमार्गस्य प्रतिषेध इतीरितः ॥

शिवं भूयात्

---

तेनालि, भारती मुद्राक्षरशालायां मुद्रितम् १९३६.

| | |
|---|---|
| शिवाद्वैतपथविधिः | रु ०— ८—० |
| केवलाद्वैतपथप्रतिषेधः | १— ०—० |
| वैष्णवपथप्रतिषेधः | ०—१२—० |
| व्यासपंथः | १— ०—० |
| वेदान्तार्थपरिष्कारतारहारः | १—८—० |

---



---